# PRABHÁTA SWAPNAM

## ( MORNING DREAM )

## A DRAMA IN SANSKRIT

BY

RAM NATH TARKARATNA,

AUTHOR OF VASUDEVA VIJAYAM, ARYA LAHARI, VILAPA LAHARI, ÇRIBHASYA-SARA, NYAYA-PRADIPA AND OTHER WORKS.

---

CALCUTTA :

PRINTED AND PUBLISHED BY SANYAL & CO.,
AT THE BHARAT MIHIR PRESS,
25, ROY BAGAN STREET.

---

1905.

*Price Rs. 2 only.*

# प्रभातस्वप्नम् ।

## नाटकम् ।

श्रीरामनाथ-तर्करत्नेन प्रणीतम्

'इह कीर्त्तिमतां कीर्त्तेर्घटनापटवः परे ।
उभयत्र प्रवीणा ये त एव कवयो मताः ॥'

अलङ्कारशेखरे ।

कलिकाता-राजधान्यां
भारतमिहिरयन्त्रे सान्याल एण्ड कोम्पानिना मुद्रितम् ।

शकाब्दाः १८२७ ।

मूल्य २,

# शुद्धिपत्रम् ।

पृ । प ।

३६ । १८

प्रियसखि ! इदर्थानभिज्ञेऽपि जने तवाशङ्का ।

१७७ । ६

कस्मात् । समासन्नस्वामिप्यन्ते ऽनास्य मधुरालापो मम कर्णरसायनं भवति ।

---

# उत्सर्गः

बहुमानास्पद श्रील श्रीयुक्त अनरेबल् जष्टिश्
आशुतोष मुखोपाध्याय एम्, ए, डि, एल्,
एफ, आर, एस्, इ, एफ्, आर्, ए, एस्,
सरस्वतीप्रभृत्युपाधिमण्डितपण्डितप्रवरेषु

विद्यादयाशौचमहत्त्वमुख्यान्
गुणानिवैकत्र दिदृक्षुरुच्चैः ।
आदर्शभूतं प्रियदर्शनाद्य
व्यधाद्विधिस्त्वा विबुधैकबन्धो ! ॥

त्वामिव प्रतिभापूर्णं पुत्ररत्नमुपेयुषी ।
वङ्गभूमिः स्वमूर्धानं करोत्युच्चैः स्मयादिव ॥

अप्याशुतोषनामा
त्वमाशुतोषः प्रकृत्यासि ।
नामान्वर्थं महतां
सुधाकरोऽसौ यथा सुभग ! ॥

उपदत्तमिदं गुम्फा सूक्तिमुक्तामयं मया ।
आमुञ्च त्वञ्च कण्ठेऽस्मिन् वैकुण्ठ इव कौस्तुभम् ॥

१८२७ शाके २८ आश्विनस्य । शान्तिपुरात् ।

भवदीय—
श्रीरामनाथ शर्मणा ।

# शुद्धिपत्रम् ।

## पाठपरिवर्तनम् ।

| पृष्ठे । | पंक्तौ । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ६ | १२ | प्रणष्ट | प्रनष्ट |
| १२ | ११ | साकूतं—पाम | मन्थे मन्दमपां नुदन्- मम |
| १३ | ६ | सुखमम्- | सुखमनु- |
| १४ | १४ | आरम्भितो | आमन्त्रयन् |
| २० | ११ | -मिलति | -मिलते |
| ३४ | २ | कृते | कृते नयन- |
| ,, | १७ | लजविद | लज्जविद |
| ४३ | ८ | णिममाभेद् | णिममेद् |
| ४६ | १९ | पद्मे जनक- | पद्मे मभाव्य । जनक- |
| ४७ | २१।२२ | उच्चिन्वन्तौ—कुवन्तौ | उच्चिन्वतौ—कुर्वतौ |
| ४९ | ६ | अलह | अलह |
| ५४ | ३ | दुरवापेय | दुरवापेयमिति |
| ,, | १० | गुणार्थो | गुणा ( पुंस्येवमन्यत्रापि । ) |
| ५८ | ५ | मिहिलेसर | मिहिलेसरस्स |
| ६२ | १० | शीर्षा | शीर्षः |
| ६३ | १७।१८ | जामविंछि भो | जग्गसु हो |
| ९२ | ८ | डार्षि | दार्षि |
| ९४ | ५ | अहिलासो | णिव्वन्धो ( निर्बन्धः ) |
| १०२ | ५ | नीलाम्बुज- | मरकत- |
| १०७ | २१ | ऽपि | ऽपि निर्व्याजं |
| १०८ | ३ | हष्ठि | हष्टि- |
| ,, | २० | शक्तिः | शक्तिधरः |

# शोधपत्रम् ।

पृ: १५ । प १२ । किञ्च ।

कान्ता कश्चन्दिनो जीयान्नूनेय प्रतिश्चिन्विन: ।

कुन्दारविन्दबन्धूक शालिन्येका लतासु का ॥

पृ· १५ । पं १६ । ( गहनस्य )———क्रतगंधशैलस्य

पृ· ५४ । प ८ ।———( सान्त:स्मितम् । )

प्रायेण कवय: काव्ये कामतन्त्रे च कामिन: ।

सवत्रैवाभिनयन्ता: कल्पयन्ति नवं नवम् ॥

पृ· १२९ । पं ४ ।———। सुन्दरि ।

अतिसुकुमारो यस्य सौरभभरित: प्रौढरागोऽस्य ।

लम्बति कपोलबिम्ब तरल: कर्णान्तसंसक्त ॥

पृ: १२९ । पं १२ । ( औत्सुक्यान सुनृतां चर्यां निध्याय त्वमागतम् । )

अनियता चन्द्रिका न मन्दिरा न शरीरिणी ।

मूर्तिमती नु प्रभुना भातीयं सृष्टिरद्भुता ॥

पृ: १८१ । प ८ । ( सखि ) सख्य

# प्रभातस्वप्नम् ।

## नाटकम् ।

---

### प्रथमोऽङ्कः ।

अशेषगुणरत्नाय नमः शेषाङ्कशायिने ।
रामायाश्चर्यरूपाय निष्कलाय कलाभृते ॥

अपि च ।

रागस्ते सहजोऽपि चेतसि परित्यक्तस्वभावोऽधुना
संप्राप्तो बहिरेव मानभरितं मुञ्चति चाटूक्तिभिः ।
कोपात् कोकनदच्छविं नतमुखीमाच्छिद्य पाणिं श्रियं
यान्तीं मौनपरायणामनुनयन् श्रीशोऽस्तु वः श्रेयसे ।

किञ्च ।

स्थाणुः स्वयं यद्दयिताप्यपर्णा
पुत्रो विशाखः सुहृदो द्विजिह्वाः ।
एवंप्रकारोऽपि परं य एकः
कल्याणहेतुर्जगतः स पातु ॥

( नान्द्यन्ते । )

सूत्रधारः । अलमतिविस्तरेण । ( नेपथ्याभिमुखमवलोक्य । )
मारिष ! इतस्तावत् ।

( प्रविश्य । )

पारिपार्श्विकः । भाव ! तत्रभवानाज्ञापयतु ।

सूत्रधारः । ( समन्तादवलोक्य । ) अद्य खलु सुरासुरनर तिर्यगलङ्घनीयनियोगस्य स्ववियोगविधुरप्रपन्नजनहृदय-सन्तर्पणायेव शान्तिपूरप्रसरं शान्तिपुराख्यनगरे कृताव-स्थानस्य श्रीमन्मदनगोपालस्य फल्गूत्सवावलोकनाय परिमिलितयानया विदग्धविद्वज्जनपरिषदा सदातन विनयसनाथरामनाथविरचितं समुचितरुचिरुचिरतया सहृदयहृदयास्वाद्यं "प्रभातस्वप्न" नाम नाटकं प्रत्यग्र-तया त्वया प्रयोक्तव्यमित्यादिश्य विशिष्य पुनः परस्परं प्रशंसितमेतत् । तत् खल्वधुना शीलयन्तु कुशीलवा वर्णिकापरिग्रहम् । ( विचिन्त्य नेपथ्यद्वारं यावत् परिक्रम्य च । ) आर्ये ! इतस्तावत् ।

( प्रविश्य । )

नटी । ( आन्तिमभिनीय । ) अज्जउत्त ! इअं म्हि । (१)

सूत्रधारः । ( परिक्रम्य । ) आर्ये ! प्रभातस्वप्नप्रयोगदर्शनाय समुत्सुकेयं सकलकलाकलापकुशला गोष्ठी ।

(१) नटी । आर्यपुत्र ! इयमस्मि

नटी । (निरूप्य । सविमर्शम् ) णं दीसइ क्खु एसा बहु-विण्णाणपरिणिट्ठिदा दाव गरिट्ठा सहिअअगोट्ठी । ता कधं णाम अम्हेहिं सक्किज्जइ हिअअं से आवज्जिदुं । (२)

सूत्रधारः । मा मेवम् । कथयामि ते भूतार्थम् ।

इह खलु विशेषविदुषा-
मुन्नतमनसां गुणज्ञता प्रायः ।
निर्मलतरं हि सलिले
प्रतिबिम्बग्राहिणी शक्तिः ॥

पारिपार्श्विकः । भाव ! श्रूयते खल्वसौ कविः पदवाक्य-प्रमाणप्रवीणोऽपि नाम कवित्वावतारनवीनतरतीर्थं इति ।

सूत्रधारः । यत् सत्यं, निसर्गमित्रधेयमस्माकं पवित्रनामधेय-महामहोपाध्यायविद्यावागीशपदलाञ्छनकालिदासाङ्ग सम्भवः सम्भावितवेदान्तादिविविधवाङ्मयनिर्माणनिचयः खल्वयं सहृदयधुरीण इति । यस्य हि खल्वियं वाचो-युक्तिः ।

गाम्भीर्यसिन्धुनिरता
त्रिविधाध्वगता विशुद्धवर्णापि ।

(२) नटी । ननु दृश्यते खल्वेषा बहुविज्ञानपरिनिष्ठिता तावद्गरिष्ठा सहृदयगोष्ठी तत् कथ नामास्माभिः शक्यते हृदयमस्या आवर्जयितुम् ।

सुरनिम्नगेव सरसा
सूक्तिरियं रामनाथस्य ॥

किं बहुनोक्तेन ।

सूक्तीनामुक्तिवैचित्र्यात् पाश्चात्या यं विपश्चितः ।
तुलयन्ति तुलाकोटिमारोप्य पूर्वसूरिभिः ॥

नटी । को ण वेअदि, विस्सुदो क्खु अअं । सुव्वइ अउव्वं दाव वासुदेअविजअं णाम जस्स जीविअसव्वस्सं महकव्वं । जेण अ पुणो कोइलकुलवइणा विअ गोउणन्दणुज्जाणं सणाहीकरिज्जइ । ता किं चित्तं, कव्वं ज्जेव्व कइत्तणं पिसुणेइ । (३)

सूत्रधारः । ( सशिरःकम्पम् । ) अथकिम् । ( विभाव्य । ) प्रिये ! सम्प्रति हि,

लवणजलधिवेलासङ्गगङ्गाप्रसङ्गा
नवमधुमदमाद्यत्कामिनीभुक्तमुक्तः ।
वहति मलयशैलारण्यदोलाविलासी
तरुणकरुणमल्लीगन्धबन्धुः समीरः ॥

तदिह सहृदयहृदयरञ्जनाय तावत् खल्वमुमेव वसन्तसमयमधिकृत्याविगीतं किञ्चिद्गीयताम् ।

(३) नटी । को न वेद । विश्रुतः खल्वयम् । श्रूयते, अपूर्वं तावद्वासुदेवविजयं नाम यस्य जीवितसर्वस्वं महाकाव्यम् । येन च पुनः कोकिलकुलपतिनेव गोऽडनन्दनोद्यानं सनाथीक्रियते । ततः किं चित्रं, काव्यमेव कवित्वं पिशुनयति ।

नटी । तह । (४) ( इति सूत्रधारमुखमुदीक्ष्य तिष्ठति । )

सूत्रधारः । (निर्वर्ण्य । सोद्वेगमात्मगतम् ।) अये क्लान्तासौ । ( इति स्वोत्तरीयेण बीजयन् वामकरतर्जन्या तालं ददाति । )

नटी । ( गायति ।

पवहइ दक्खिणपवणो
गाअइ अ पिओ वि पंचमं एअं ।
सहि ! उण दावइ मअणो
जाणीअइ ण क्खु से चेअं ॥ (५)

पारिपार्श्विकः । अहो नु नन्दनवनेऽपि दुर्लभः खल्वीदृशो मधुरः कण्ठः

मृदुमृदुमारुतसङ्गा
दङ्गुलिभङ्गीनिर्यान्विता स्वैरम् ।
हरति स्वरलहरीभि-
र्हृदयं हृन्मोहिनीवासौ * ॥

सूत्रधारः । ( सपरितोषम् । ) आर्ये ! साधु गीतम् ।

---

(४) नटी । तथा ।

(५) नटी । प्रवहति दक्षिणपवनो गायति च पिकोऽपि पञ्चममेवम् ।
सखि । पुनस्तापयति मदनो ज्ञायते न खल्वस्य चेतः ॥

* अत्र "हार्मोनियम्" नामकवाद्ययन्त्रविशेषः स्मर्तव्य ।

नटी । (सविनयम् ) अज्जउत्त ! ण हु सुवसं णिहसपट्टिअं विणा सिलापट्टए कमिज्जइ । (६)

सूत्रधारः । (चिन्तामभिनीय । सोद्वेगम् ।) हन्त जीर्णविदीर्णकार्मुकस्य विनिमयेन मया वितीर्णपणाधिकमूल्येन च या किल कनककार्मुकलता समासादिता, सा खल्वद्य सुमित्रापत्यानुगतेन गतेन पथि भार्गवसञ्चरणयोग्ये तत्रैव विस्मृतेति मे निगूढचिन्ताकूढं हृदयम् !

पारिपार्श्विकः । (विहस्य ।) भाव ! ननु मनसि तव चिन्तासन्तानेनेव कृतं मे तत्र विस्मयेन पदम् । यत् खलु समीचीनविवेकाक्रान्तहृदयस्यापि तं प्रणष्टद्रव्यस्य कृते चिन्तेति ।

सूत्रधारः । क इह विस्मयः । तथा हि,

विषयपराङ्मुखमनसो
योगीन्द्रस्यापि विदिततत्त्वस्य ।
भवति हि नितान्तचिन्ता
प्रियस्य खलु वस्तुनस्त्यागे ॥

( नेपथ्ये । )

साधु भोः कुशीलवकुलावतंस ! साधु ।

(६) नटी । आर्यपुत्र ! न खलु सुवर्णं निकषपट्टिकां विना शिलापट्टे काष्यते ।

सूत्रधारः । अये कथमसौ मिथिलापुरन्दरस्य पुरोहितः शतानन्द इत एवाभिवर्तते । तद्वयमन्यतो गच्छामः ।

( इति निष्क्रान्ताः सर्वे ॥ )

( प्रस्तावना )

( ततः प्रविशति वनवर्त्मनि स्थितः शतानन्दः । )

शतानन्दः । विषयपराङ्मुखेति पुनः पठित्वा परिक्रम्य च । साकूतम् । ) एवमेतत् कः सन्देहः । तथाहि, नियतयोगाभ्यासविशुद्धचित्तेन तेन महाराजजनकेनापि पुरस्तान्मे नितान्तचिन्तापिशुनमेवं मन्त्रितम् । "भगवन् शतानन्द ! इह खलु महीयसि महीमण्डले चन्द्रचूड़चापारोपणसमर्थः परमार्थतः कोऽप्यस्तीति नहि सम्भाव्यते । सम्भाव्यते चेदिहागत्य कुतस्तावत् स बाणोऽपि, कथं रे बाण । तवाधिज्ये धनुष्युपयोगो न पुनरीदृशीति निःशङ्कं लङ्केश्वरेणोपहासगर्भमधिक्षिप्तोऽसौ विक्षिप्त इव मनसा विनिन्द्य निजभुजसहस्रभारं सहभारं यन्निरयासीत् । आसीच्च यत् पुनस्तदनुपदमेव तुलितयशोराशिमिषस्फटिकाचलोऽप्यतुलितयशोराशिर्दशकण्ठोऽपि श्रीकण्ठकोदण्डकुण्ठितशक्तिर्भोगोत्सिक्तोऽपि धिक्कृतभुजाभोगः शैवं धनुरिति बहिरेव परमशैवतामवलम्ब्य विलम्ब्य किञ्चित् सुलभेनो-

पायेन कन्यारत्नमासादनीयमिति तदारोपणविमुखो-ऽपि बहुसुखतोचितं प्रलपन् विलपंश्चात्मगतं प्रतियातः । अतएवालं तावदन्येषामपि खल्वितः प्रतिनिवृत्तानां वृत्तान्तोल्लेखनैरिति" । (पुरस्तादवलोक्य ।) कथममी याज्ञवल्क्यशिष्यः कुशाग्रमतिः ।

( प्रविश्य । )

कुशाग्रमतिः । ( सपादोपग्रहम् । ) भगवन्नभिवादये ।

शतानन्दः । आयुष्मान् भूयाः । कुत आगम्यते ।

कुशाग्रमतिः । महाराजसीरध्वजाय योगीश्वरस्य वाचिकं निवेद्य ततः प्रतिनिवृत्तोऽस्मि ।

शतानन्दः । ( सौत्सुक्यम् । ) ननु कीदृग्वाचिकम् ।

कुशाग्रमतिः । इदमेव, "राजर्षे ! जनक ! नितान्तचिन्ता कुलः श्रूयसे । ननु तदनुचितं तव विदितसंसार-सारस्य । यावदुपलप्स्यते भवानचिरेणैव कालेन रत्न-गर्भासम्भूतकन्यारत्नानुरूपमेव जामातृरत्नम् । प्रयत्नतो मे कुशिकनन्दनोऽपि राजकुमाराभ्यां कुमारप्रतिमाभ्यां सहाधिष्ठानेन भवदीयभवनं भाविनि खलु चतुर्थेऽहनि पवित्रयिष्यतीति" ।

शतानन्दः । ( सविमर्शम् । ) अपि नाम कमुद्दिश्य चिन्ता-प्रतीकारवचनम् ।

कृशाग्रमतिः । ननु दुरधिगमाशयो भगवान् योगीश्वरः । परन्तु वयमिदं तर्कयामः । तत्र खल्वचिरादेव निशित शरशरजालवितातिततताडकेयादिनिशाचरनिकरो बरदृप्त-रक्षःप्रवरस्य मनसि सहसा समाहितमानवभयपूर्वाव-तारो धनुर्वेदग्रहणसमकालमेव विश्वाणितगुरुदक्षिणः पादरजसा मानुषीकृतपाषाणः कोशलेशतनया विन-यादिगुणारामोऽयं रामो नामेति कौशिकस्य भगवतः प्रमुखादुपलब्धप्रवृत्तिर्निवृत्तिपरायणोऽपि योगीश्वरस्तमेव सुकुमारदर्शनं कुमारं पिबन्निव विस्फारितनिर्निमेषचक्षुषा किमपि ध्यायंश्च सपद्येव यदानन्दनिर्भरः संवृत्तः । प्रवृत्तश्चासौ पुनस्तदनन्तरमेव विनयावनतमौलिः श्रव णाञ्जलिं मे वाचिकामृतपूरेण परिपूरयितुम् । तेन खलु तमेव दिनकरकुलधुरीणमुररीकृत्य चेतसि तच्चिन्ताप्रतीकारवचनं भगवत इति ।

शतानन्दः । ( सपरितोषम् । ) साधु, ननु यथार्थनामासि । न ह्युपसर्पति प्रायो विशेषविदुषा मानसं खल्वनभि-मतं ।

यतः ।

अनन्यसामान्यगुणाभिरामं

विहाय कामं सदनं सुधायाः ।

ग्रहेष्वजस्रं निरवग्रहोऽपि
भवेन्मतः को नु चकोरकाणाम् ।

क नु पुनरिदानीं दाशरथी ।

कुशाग्रमतिः । श्रुतं मया, "विश्रुतकर्माणौ तावमौ यावत् कृतवयस्यभावेन चटुलस्वभावेन वटुनानुगम्यमानौ खल्वद्य प्रातरेव प्रमदोद्यानं प्रति चलिताविति" । (सविनयम् । ) तदधुना पुनः साधयामि गाधिसुतस्य महर्षेः परिचर्यार्थमाचार्यनिदेशात् । (इति निष्क्रान्तौ । )

( शुद्धविष्कम्भकः । )

( ततः प्रविशतो रामलक्ष्मणौ वटुश्च । )

रामः । ( परिक्रम्य समन्तादवलोक्य च । ) वयस्य मोमुख ! पश्य रमयति मामारामरमणीयता । तथा हि,

मूलादपि मध्यादपि
शिखरादपि किञ्चिरातस्य ।
कात्स्न्यमिव भगवतो
यतस्ततो निर्गतं कुसुमम् ॥

अपि च ।

स्तबकस्तनभरनम्रा
कम्राक्षीलालिलोचना मञ्जी ।

मधुमिह कुसुमापातै-
र्दयित इतीयं समर्चयति ॥

किञ्चिदग्रतो गत्वा । मस्पृहम् । ) नन्वियम्,

कुसुमतिरोहितमकला-
वयवं प्रकटानुरागभारमिव ।
यूथी पलाशविटपिन
मवनमयति गाढ़मालिङ्ग्य ॥

(मपरितोषम । विशेषतो हि प्रदेशस्तावदसौ हिमाद्रि-पादप्रत्यासन्नतया शोभातिशयमादधाति ।

गोमुखः । किं बुभुक्खिअस्स मज्झ णिप्फलसोहादंसणेण । जइवि एत्थ दाव थोअं वि मोअअं लब्भइ, तदो सच्चं रमणिज्जा क्खु एसो । ७)

रामः । ( सस्मितम् । ) अपि नामात्र ते सम्भाव्यते फलाहारः ।

गोमुखः । परिक्रम्य । भो वअस्स जइ एव्वं ता दाणिं सुणासु । अहिणव मइ-रस तरङ्गिअ-ललिअ-लदालिङ्गिअ कुसुम-हसिअ-तरुण कअणतरु-मण्डलं कुण्डलिअ-कोदण्ड-चण्ड प्पहार-पडु-मअण सुहड़-पत्तलिज्जन्त-सहआर-

(७) गोमुख । किं बुभुक्षितस्य मम निष्फलशोभादर्शनेन । यद्यत्र तावत् स्तोकमपि मोदकं लभ्यते, तदा सत्यं रमणीयं खलु एष ।

कुर-सिहीमुहं रज्जन्त कण्ठ-कलकण्ठ-कुल-कल-अल कोलाहल-मुहलिज्जन्तं मणोज्जं कव, एदं पमदुज्जाणं पेच्छन्तो णिव्वुदिं दाव अणुहोउ भवं । तधा हि,

मम्मि मम्महसुहिओ
तरुअणमित्तो लआवहूबन्धू ।
मलआणिलबालसहो
पिअ-महुअ-पिओ महू पत्तो ॥ ८

रामः । विहस्य । वयस्य । साधु साधु । (परिक्रम्य ।) अहो नु खलु निरतिशयसुखाकरोऽयं सरसीपरिसरः ।

अन्तःपद्मपरागपुञ्जकपिशं कुर्वन् द्विरेफव्रजं
क्रीडायासशयालु हंसमिथुनं संवीजयन्नम्बुजे ।
साकूतं चलदूर्मिभिः प्रणयिनीपार्श्वं रथाङ्गं नयन्
प्रत्यङ्गं पवनो मुहुः स्पृशति मे पाणिर्वसन्तश्रिय. ॥

(८) गोमुख । भो वयस्य । अद्य न तदिदानीं प्रभा । अभिनवमधुरमतर्वाङ्कुरलालित-लतालिङ्गितकुसुमहासिततरुगणान्तःकलितकम... क्रीडा... दण्डप्रहारपटुमदन सुभटतस्मीक्रियमाणमनस्कारान्कुरशालिमुख रज्यत्कण्ठकलकण्ठकुलकलकल कोलाहलमुखरायमाणं मनोज्ञं खल्वेतत प्रमदोद्यानं पश्यन् निर्वृतिं तावदनुभवतु भवान् । तथाहि,

मम्य मन्मथसुहृत तरुगणमित्र लतावधूबन्धुः
मलयानिलबालसखः पिकमधुपप्रियो मधुः प्राप्तः ॥

गोमुखः । भो वअस्स ! किं वुच्चइ, एआरिसवारिदंसणादो सीअत्तस्स वि तिह्ना भवे । (९)

लक्ष्मणः । आर्य ! इह खलु जलयन्त्रस्यादूरतः क्षतककुञ्ज स्थितस्फटिकशिला दिकायामुपविश्य क्षणं विश्राम-सुखमनुभवतु ।

रामः । यदभिरुचितं वत्साय । इति सह ताभ्यां तत्रोपविशति ।

लक्ष्मणः । विचिन्तय । अहं तावद्विनोदार्थं कुसुमान्याहरामि ।

रामः । बाढम् ।

लक्ष्मणः । अपवारितकेनान्यतो गत्वा कुसुमावचयं नाटयति ।

रामः । निमित्तं सूचयन् । । सखे ! गोमुख ! लक्ष्यते खलु दक्षिणेक्षणस्फुरणेन किञ्चित् कुशलमिवात्र । (ध्यानं नाटयित्वा । स्वगतम् ।)

स्वप्न ! प्रसीद दर्शय
सकृदेव पुनः प्रकीर्णकेशां ताम् ।
अंसन्यस्तविपञ्चीं
सिञ्चन्तीमश्रुधाराभिः ॥

---

(९) भो वयस्य ! किमुच्यते । एतादृशवारिदर्शनतो शीतार्तस्यापि तृष्णा भवेत ।

गोमुख: । ( विहस्य । भो वअस्स ! साविस्तीए सवामि । सच्चं क्खु इणं कल्लाणपिसुणं । ( सकौतुकम् । णं दक्खिणेण माहवीमण्डवं कीलासेलस्स पुरओ पेच्छ दाव मिअङ्कमणिणिम्माविअं पणइ-जण-मिहुणं नाम । (१०) ( इति तर्जन्या निर्दिशति ।

राम: । ( सस्मितम् । अहो नु प्रवातसुभगोऽयमुद्देश: ।

आधूतैर्वनदेवतामिव शनैरावेदयन् पल्लवै-
गायन् स्मेरसरोजसौरभमिलद्भृङ्गालिनादैरिव ।
रोमाञ्चैरिव केशरै: सुमनसामारञ्जितो मारुत:
कान्तादूत इवोपसर्पति सखे ! खिन्नस्य पार्श्वं मम ॥

आकाशे गीयते । )

उल्लुल्ल-जणिअ-राआ
लइणी आलिङ्गिउं सअं चूअं ।
अलिकुलकलविरुएहिं
पुप्फाहरणा फुडं भणइ ॥ (११)

राम । (कर्णं दत्त्वा ।) अये कस्याश्चिदियं नवानुरागाया: प्रावेशिकी ध्रुवा ।

(१०) गोमुख: । भो वयस्य । सावित्र्या शपामि । सत्यं खल्विदं कल्याणपिशुनम् । ननु दक्षिणेन माधवीमण्डपं क्रीडाशैलस्य पुरत: पश्य तावन्मृगाङ्कमणिनिर्मितं प्रणयिजनमिथुनं नाम ।

(११) आर्द्रार्द्रजनितरागा लतालिङ्गितुं स्वयं चूतम् ।
अलिकुलकलविरुतै: पुष्पाभरणा स्फुटं भणति ॥

( नेपथ्ये । )

इदो इदो भट्टिदारिए ! । १२)

रामः । ( सदृष्टिक्षेपं सविस्मयम् । ) कथमियमनभ्रा सुधावृष्टिः । (स्वगतम् ।) ननु पूर्णेन्दुसन्दर्शनेनेव महासागरस्य दशामवाप्तोऽस्मि । यदद्य ममादिष्टोऽहं प्रमदोद्यानदर्शनाय भगवता योगीश्वरेण तत्र खलु तावदिदमेव बीजम् ! ( निपुणं निर्वर्ण्य ! ) अहो नु खलु,

नूनं नूतनममृतं
त्रिभुवनहृदयप्रमोदनं किमपि ।
कामं कामनृपार्थं
लावण्यमुपायनं सुदृशः ॥

विभाव्य । सहर्षम् । ) अहो स्वप्नोऽपि नाम कश्चित् कदाचिदेवं फलति । ( प्रकाशम् । ) कथमित एवाभिवर्तते सखीमात्रसहाया कुमारीयम् । वयस्य ! तदस्यैव विविक्तरमणीयलतागहनस्य पश्चादवस्थाय प्रतिपालयावः । ( इति परिक्रम्यापवार्य च स्थितौ ) ।

( ततः प्रविशति सीता सूनृता च । )

सीता । ( सोत्कण्ठमात्मगतम् । ) किं णु क्खु सिविणए वि जं पेक्खिअ कुमारीजणविरोहिणो विआरस्स गमणी-

(१२) इतइतो भर्तृदारिके ।

अम्हि संवुत्ता। अदो वरं वि तं अहिलसन्ती इन्त अत्तणा वि दाव लज्जेमि। ता कहं णाम इमं वुत्तन्तं पिअसहीए णि॰देमि। विचिन्त्य।) अणिवेअणेण वा कहं पडिआरो भविस्सदि। तदो ण आणि अप्पडि-आरवेअणं केत्तिअं कालं विही मं णइस्सदि त्ति।

दीर्घं निःश्वस्य। सदैन्यम् ) अवि णाम।

णिंदउ लोओ विंदउ
छिद्दं पिसुणो सहीअणो हसउ।
जाउ मणोरहदइअं
तं विसुमरिउं ण पारिस्सं॥

वामाक्षिस्पन्दनं सूचयित्वा।) हिअअ! दाणिं साहिलासं होहि। सुइज्जदि क्खु इमिणा निमित्तेण रेहइ पुरदो विअ दे सो दुल्लहजणो त्ति। (सविमर्शम्।) अवि किं होदि सिविणअदिट्ठजणस्स संवाओ। (प्रकाशम्) सहि! सुणिदे! णं सच्चं एव्व रत्तासोओ कुसु-मिदो। (१३

(१३) सीता। किं नु खलु स्वप्नेऽपि य प्रेक्षा कुमारीजनविरोधिनो विकारस्य समवायास्मि संवृत्ता। अतःपरमपि तमभिलषन्ती आत्मनापि तावल्लज्जे। तत् कथं नामेमं वृत्तान्तं प्रियसख्यै निवेदयामि। अनिवेदनेन वा कथं प्रतीकारो

सुनृता । णं अलिअं विमंतिदुं अणभिण्णो दे सही-
जणो । (१४)

सीता । (सोद्वेगं कतिचित् पदानि गत्वा ।) सहि ! कहिं पत्थिदा सि । (१५)

सुनृता । पिअसहि ! अणचित्ता विअ लक्खीअसि । (१६)

सीता । (सावहित्थम् ।) हला अहं क्खु एवं भणामि, रत्तासोअमग्गं उज्झिअ कहिं पत्थिदा सि । (१७) (इति परिक्रामति ।)

सुनृता । (आत्मगतम् ।) सङ्कमि हिअअम्मि से भावाणुप्पवेसो मंवुत्तो त्ति । होदु । जाणिस्सं । (प्रकाशम् ।) एसो रत्तासोओ । (१८)

भविष्यति । ततो न जाने अप्रतीकारवेदना कियन्तंकालं विधिर्मां नर्तयिष्यतीति । अपि नाम ।

निन्दतु लोको विन्दतु छिद्रं पिशुनः सखीगणो हसतु ।
जातु मनोरथदयितं न विस्मरतुं न पारयिष्यामि ॥

इदंयदानीं साभिलाषं भव । मन्यते खल्वनेन निमित्तेन राजते पुरत इव ते मदनभजन इति । अपि किं भवति स्वप्नदृष्टजनस्य रूपवादः । सखि । सुनृते । ननु सत्यमेव रक्ताशोकः कुसुमितः ।

(१४) सुनृता । नन्वलीकं विमन्त्रयितुमनभिज्ञस्ते सखीजनः ।

(१५) सीता । सखि । कुत्र प्रस्थितासि ।

(१६) सुनृता । प्रियसखि । अन्यचित्तेव लक्ष्यसे ।

(१७) सीता । हला अहं खल्वेवं भणामि रक्ताशोकमार्गमुज्झित्वा कुत्र प्रस्थितासि ।

(१८) शङ्के हृदयेऽस्या भावानुप्रवेशः संवृत्त इति । भवतु । ज्ञास्यामि । एष रक्ताशोकः ।

सीता । ( उपसृत्य । ) अम्मो । कहं कुसुमिदो मह वल्लहो । (१९)

रामः । सम्प्रति सन्निधानेन तव सफलोऽपि सं वृत्तः ।

गोमुखः । ( छोटिकां दत्त्वा सदर्पम् । ) ही ही भो । तेण हि आमरिअप्पाआ मज्झ मल्लिवाअणिअस्स मोदअ-खण्डिआ दाव । ( इति तत्र गन्तुमिच्छति । ) (२०)

रामः । सखे ! न खलु ते युक्तं गन्तुम् । ( इति तं हस्ते धारयति । )

गोमुखः । भो वअस्स ! णत्थि दाव इमाए मणं पि णेवच्छक-प्पणं, तहा वि इअं अच्छरीअदंसणा । अहवा ण दच्छा रसो सक्कराए महुरीकरिज्जइ । २१)

सूनृता । पिअसहि ! पेक्ख पेक्ख अग्गदो दाव,

उविभण्णा णअकलिआ

णिउणदरो महुअरो भरइ राअं ।

---

(१९) सीता । अम्मो । कथं कुसुमितो मम वल्लभः ।

(२०) गोमुखः । हो हो भोः । तेन हि सम्मुखागतप्राया मम स्वस्तिवाचनिकस्य मोदकखण्डिका तावत् ।

(२१) गोमुखः । भो वयस्य ! नास्ति तावदस्या मनागपि नेपथ्यकल्पनं, तथापीयमाश्चर्यदर्शना । अथवा न द्राक्षारसो शर्करया मधुरीक्रियते ।

समअज्जो उण एसो
ण कुणाइ फंमं समंतओ भमइ ॥ (२२)

सीता । णं इदो दाव,
आअम्बकुसुमगुञ्छं
राअं वहई व महुसिरी रमणं ।
उअ पिअकलविरुएहिं
भोअकुमारी व वाहरइ ॥ (२३)

रामः । अहो हृदयनिर्वाणमिदं गाथाद्वयम् । अद्य खलु पीतमपीतपूर्वं कर्णरसायनमेतत् । किञ्च ।

शीलय वल्लकि ! मौनं
परिभवखेदात् पिकाद्य मा क्रन्द ।
पीयूष ! मुञ्च गर्वं
स्फुरन्ति वाचः कुरङ्गाक्ष्याः ॥

गोमुखः । भो वअस्स ! णूणं एसा जीवअसई मअणस्स

---

(२२) सुनृता । प्रियसखि ! पश्य पश्यात्तत्तावत् ।
उद्भिन्ना नवकलिका निपुणतरो मधुकरो भरति रागम् ।
समयज्ञः पुनरेष न करोति स्पर्शं समन्ततो भ्रमति ॥

(२३) सीता । नन्वितस्तावत् ।
आताम्रकुसुमगुच्छं राग वहन्तीव मधुश्रीरमणम् ।
पश्य पिककलविरुतैर्भोगकुमारीवाह्वयति ॥

मउमउवोलेहिं तुमं मिअं विअ अप्पणो वसं करेइ। (२४)

(रामः। स्मयमानमुखः पश्यति।)

सूनृता। पिअसहि! इह दाव फलिह-सिला-वेइआए उववि‍सिअ मुहुत्तअं विस्सामसोक्खं अणुभोमो। (२५)

सीता। जह दे रुच्चदि। (२६) (इत्युभे तथा कुरुतः।)

सूनृता। (स्वगतम्।) समओ क्खु एसो अस्सवुत्तन्तेण पम्माणं परिक्खिदुं। (प्रकाशम्।) सहि! किं सुमरसि रत्तासोअकुसुमसमअम्मि अङ्गीकिदपाणिग्गहणो मालिआए राअहंसो णाम सुओ त्ति। (२७)

सीता। हला कीस विस्सरामि दाव। आआरिदो पणइणी। (२८) (इत्यर्धोक्ते तूष्णीमवतिष्ठति।)

(२४) गौमुखः। भो वयस्य! पुनरेषा व्याधस्त्री (कणाकर्षणार्हन्तः) मदनस्य मृदुमृदुकलकलैस्त्वां मृगमिवात्मना वशं करोति।

(२५) सूनृता। प्रियसखि! इह तावत् स्फटिकशिलावेदिकायामुपविश्य मुहूर्तकं विश्रामसौख्यमनुभवावः।

(२६) सीता। यथा ते रोचते।

(२७) सूनृता। समयः खल्वेषोऽन्यवृत्तान्तेन प्रमाणं परीक्षितुम्। सखि! किं स्मरसि रक्ताशोककुसुमसमयेऽङ्गीकृतपाणिग्रहणः मालिकाया राजहंसो नाम शुक इति।

(२८) सीता। हला कस्माद्विस्मरामि तावत्। आकारितः प्रणयिनी।

सुसृता । (निरूप्य ।) दिट्ठिआ णं किदावदरणमङ्गलाइं से अङ्गआइं दाणिं जोव्वणस्स पदविं विक्खन्ति । (२९)

रामः । सम्यगाह सहचरी । सत्यं वयःसन्धावियं वर्तते ।

गोमुखः । हुं, सन्धिं वि जाणाइ वअस्सो । (३०)

रामः । जानामि । शृणु ।

आकारितः प्रणयिनीं वरितुं स राज-
हंसो मयेति गदितुं स्फुरिताधरापि ।
आकारितः प्रणयिनीति निगद्य तूष्णीं
तिष्ठत्यसौ यदधुना त्रपयानताक्षी ।

(सचमत्कारम् ।) अहो नु खलु मनोभुवो भुवनविजयवैजयन्तीव रूपशोभास्याः ।

दृष्टिर्वाञ्छति साचि वीक्षितुमियं वाणी पुनर्वक्रतां
माध्यं विन्दति मन्दमन्दमधुना बाल्योचितं चापलम् ।
वक्षस्येतदुदेति यच्च लकुचद्वन्द्वं कुचच्छद्मना
तन्मन्ये सुतनोस्तनौ निविशते तारुण्यमाकस्मिकम् ॥

अपि च ।

उदयति तरुणिमतरणौ
शैशवशशिनि प्रयत्यपि प्रायः ।

(२९) सुसृता । दिष्ट्या ननु कृतावतरणमङ्गलान्यस्या अङ्गानीदानीं यौवनस्य पदवीं वीक्षन्ते ।

(३०) गोमुख । हुम्, सन्धिमपि जानाति वयस्यः ।

कुचचक्रवाकमिथुनं
त्रिवलितटिन्यां मिथो मिलति ॥

किञ्च ।

मध्ये कृशापि सुतरां जघने घनेयं
कर्णौ ददाति कलकोकिलकाकलीषु ।
अङ्गावलोकनपरामवलोक्य चालीं
लज्जालुरङ्गमभितोऽंशुकमावृणोति ॥

गोमुखः । अम्मो । णाअं मए वअस्सो महापण्डिओ त्ति । भवदा क्खु सन्धिप्पओओ वि ण जाणिज्जइ । (२१)

रामः । सखे ! न खलु त्वया ज्ञायतेऽसौ प्रकृतसन्धिविषयकः प्रयोगः । (इति विलोकयन्नवतिष्ठते ।)

सूनृता । (दिनकरस्याभिमुखीभूयाञ्चलं प्रसार्य बद्धाञ्जलिः ।) देअ ! पदुमिणीहिअअवल्लह ! दाणिं सहीए अप्पणो अणुरूववरलाहो होदु । (२२)

सीता । (सरोषमिव ।) किं णाम अत्तणो छंदेन मंतेसि । ण क्खु अदो वरं तुए सह जम्पिस्सं । (२३)

(२१) गोमुख । अम्मा । ज्ञात मया वयस्यो महापण्डित इति । भवता खलु सन्धिप्रयोगोऽपि न ज्ञायते ।

(२२) देव । पद्मिनीहृदयवल्लभ । इदानीं सख्या आत्मनोऽनुरूपवरलाभो भवतु ।

(२३) सीता । किं नामात्मनश्छन्देन मन्त्रयसे । न खलु अतःपरं त्वया सह जल्पिष्यामि ।

सूनृता। (स्मितं विधाय।) पिअसहि! पेक्ख पेक्ख। इदो हि

जाणाइ गब्भमउलं
भमई भमरी रसालवल्लीए।
णिउणा सही व पढमं
बालाए अप्फुडं पेम्मं ॥ (३४)

सीता। (सहर्षम्।) साहु सहि! साहु। णत्थि दाव कत्थ वि ईरिसी गाहा। (३५)

सूनृता। (स्वगतम्।) कहिं पि जादराआ क्खु एसा। जीस कीड़जुट्ठकमलकलिआ विअ ण क्खु से विअसेदि मुहलच्छी। ता णूणं आआरं संगोवेदि। तधा हि।

णिव्विड़िअ-विलिआवरणे
णिहुए हिअअम्मि चउरिआ एअं।
पुड़वाए विअ पक्कं
विरहविवाअं विवाएइ ॥ (३६)

---

(३४) सूनृता। (प्रियसखि! पश्य पश्य।
जानाति गर्भमुकुलं भ्रमन्ती भ्रमरी रसालवल्ल्याम्।
निपुणा सखीव प्रथमं बालायामस्फुटं प्रेम ॥

(३५) सीता। साधु सखि! साधु। नास्ति तावत् कुत्रापीदृशी गाथा।

(३६) सूनृता। कुत्रापि जातरागा खल्वेषा। यदस्याः कीटजुष्टकमलकलिकेव न खल्वस्या विकसति मुखलक्ष्मीः। तन्नूनमाकारं सङ्गोपयति। तथाहि।
निर्विडितलज्जावरणे निभृते हृदये चतुरिकैतम्।
पुटपाक इव पाकं विरहविपाकं विपाचयति ॥

सीता । (सोत्कण्ठम् ।) हला दाणिं वि तत्थ एव्व महुअरी । (३७)

सूनृता । णं सरिसो सव्वस्स णिब्बन्धो । (३८)

सीता । (आत्मगतम् ।) हा हदम्हि मन्दभाइणी । कहिं पुणो इमं पेक्खिस्सं । (अविचारितकेन प्रकाशम्) पिअसहि । कहिं णु एसो । (३९)

सूनृता । (साकूतम् ।) णं भणेमि । (४०)

सीता । (साग्रहम् ।) हला किं भणेसि । (४१)

सूनृता । जं किल सहीए भणिदं । (४२)

सीता । (स्वगतम् ।) हद्धी हद्धी । कित्तिअं णाम झम्पिस्सं । णूणं अदिचदुराए सहीए लक्खिद म्हि । (४३)

(इति तदङ्के स्वाङ्गं तिर्यगारोप्य लज्जां नाटयति ।

सूनृता । (आत्मगतम् ।) अम्महे ।

(३७) सीता । हला इदानीमपि तत्रैव मधुकरी ।

(३८) सूनृता । ननु सदृशः सर्वस्य निर्बन्धः ।

(३९) सीता । हा हतास्मि मन्दभागिनी । क्व पुनरिमं द्रक्ष्यामि । प्रियसखि ! कुत्र न्वेष ।

(४०) सूनृता । ननु भणामि ।

(४१) सीता । हला किं भणसि ।

(४२) सूनृता । यत् किल सख्या भणितम् ।

(४३) सीता । हा धिक् हा धिक् । कियन्नामाच्छादयामि । नूनमतिचतुरया सख्या लक्षितास्मि ।

मए दाव सब्भावेण संपदं किंपि जंपिअं ।
सहीए उ चित्तगअं लज्जाए पाअडीकिअं ॥

तधा वि पुच्छिस्सं दाव णं : (सस्मितं सीतायाश्चिबुकमुन्नमय्य । प्रकाशम् ।) सहि ! पुच्छिदव्वा सि किंपि ।(४४)

सीता । हला किं पुच्छिदुकामा सि । (४५

सूनृता । (सस्नेहम् । पिअसहि ! कुदो दाव अप्पणो आअक्कं णिगूहेसि । णं,

सो हु भणिज्जइ मित्तं
रहस्समेत्तं जहागअं जत्थ ।
सञ्चारिज्जइ कामं
तह णीसङ्कं जहा हिअए ॥

ता ण जुत्तो इत्तिअवत्थं गदाए वि समाणपडिवत्तिअम्मि सहीअणे अप्पा पच्छादेदुं । (सप्रश्रयम् ।)

पणिगअ कारणमिह जं
उण रणरणअ-वअ-विहस-सारा सि ।

(४४) सूनृता । अम्महे । मया तावत् स्वभावेन साम्प्रत किमपि जल्पितम् ।
सख्याश्च चित्तगतं लज्जया प्रकटीकृतम् ॥
तथापि पृच्छामि तावदेनाम । सखि । प्रष्टव्यासि किमपि ।

४५) सीता । हला कि प्रष्टुकामासि ।

फग्गू व वग्गुहासिणि!
हन्त रसं अन्तरे धरई॥ (४६)

राम: ( निपुणं निर्वर्ण्य। ) अये यावदियम्,

निःस्पन्दं स्थिरतारञ्च चक्षुर्न्यस्य सखीमुखे।
लक्ष्यते वक्तुकामेव किमपि स्फुरिताधरा॥

स्थाने खलु तावत् सप्रणिधानमाकलयामि।

सीता। ( निःश्वस्य! स्वगतम्। ) ता एत्थ जुत्तं एव्व पच्चासेदुं। ( सखीं हस्ते गृहीत्वा। प्रकाशम्। ) परमत्थबहिणि! पिअसहि! सुणिदे!

सच्चं ण तत्थ तादो
ण हु अम्मा ण वि सहीजणो अस्सो।
ण पुणो जीविअमिदं
मज्झ मि ठाणि तुमं जत्थ॥

(४६) सूनृता। प्रियसखि! कस्मादात्मन आतङ्कं निगूहसि। ननु,
स खलु भण्यते मित्र रहस्यमात्र यथागतं यत्।
सञ्चार्यते कामं तथा निःशङ्कं यथा हृदयं॥
तन्न युक्तमेतावदवस्थां गतयापि समानप्रतिपत्तिके सखीजने आत्मा प्रच्छादयितुम्।
प्रणिगद कारणमिह यत पुनारणरणकश्यकविषमनाराप्ति।
फल्गुरिव वल्गुहासिनि! हन्त रसमन्तरं भरन्ती॥

अदो एव्व दे किं ण कहइस्सं । सुणाहि । (४७)

( इति सचकितं परितो विलोकयति । )

सूनृता । सहि ! अलं सङ्काए, फुडं जेव्व आअक्खसु । (४८)

सीता । अज्ज क्खु पहादे सिविणअम्मि को वि दाव चउरगम्भीराउदी णवणीलुप्पलदलसामलंगो णिज्जिदाणंगरूवो कुमारओ वरणमालिआए संभाविअ । (४९)

( इत्यर्धोक्ते व्रीड़ां नाटयति । )

सूनृता । ( सहर्षम् । ) पिअसहि ! एव्वंविहा जेव्व सिविणआ ण हु विप्पलम्भआ होन्ति । ता पमाणं अग्गे वण्णेहि । (५०)

रामः । ( निपुणं निरूप्य । )

एषाकूतं वक्तुकामा कुमारी

व्याहृत्यार्धं यत् परं संवृणोति ।

(४७) सीता । तदेव युक्तमेव प्रकाशयितुम् । परमार्थभगिनि ! प्रियसखि ! सूनृते !

सत्यं न तव ताता न खल्वम्बा नापि सर्वोजनोऽन्यः ।

न पुनर्जानितमेतन्ममापि स्थाने त्वं यत्र ॥

अतएव ते किं न कथयिष्यामि । शृणु ।

(४८) सूनृता । सखि ! अलं शङ्कया, स्फुटमेवाचक्ष्व ।

(४९) सीता । अद्य खलु प्रभाते स्वप्ने कोऽपि तावच्चतुरगम्भीराकृतिर्नवनीलोत्पलदलश्यामलाङ्गो निर्जितानङ्गरूपः कुमारो वरणमालिकया सम्भाव्य ।

(५०) सूनृता । प्रियसखि ! एवंविधा एव स्वप्ना न खलु विप्रलम्भका भवन्ति । तत् प्रमाणमग्रे वर्णय ।

तद्व्याचष्टे साम्प्रतं संवृतिः सा
शङ्के सख्या हर्षमेवं दधाना॥

गोमुखः। भो वअस्स! दाणिं आणन्देण ते तक्केमि, तुमं ज्जेव्व इमाए सिविणअम्मि दिट्ठो त्ति। (५१)

रामः। (सस्मितम्।) प्रतिगृहीतं वचो ब्राह्मणस्य।

सीता। पिअसहीए तुए आलिङ्गिदो। (५२)

सूनृता। (सपरितोषम्।) होदु मए जेव्व आलिङ्गिदो। तदो उण अण्णं कहेहि। (५३)

सीता। (निःश्वस्य।) किं दाव अवरं।

अदो वरं दंसणेण तस्स आणाहि जीअणं।
इहरा हन्त मे देहि सइलं सलिलञ्जलिं॥ (५४)

सूनृता। (आश्वास्य।) पिअसहि! मा विसाअं कुणसु। विप्पदीवं वि कुमारअं वसीकरिअ अहिलसिदं तुज्झ

(५१) गोमुखः। भो वयस्य! इदानीमानन्देन ते तर्कयामि त्वमेवानया स्वप्न दृष्ट इति।
(५२) सीता। प्रियसख्या त्वयालिङ्गितः।
(५३) सूनृता। भवतु मयैवालिङ्गितः। ततः पुनरन्यत् कथय।
(५४) सीता। किं तावदपरम्।
अतः परं दर्शनेन तस्य जानीहि जीवनम्।
इतरथा हन्त मे देहि सतिलं सलिलाञ्जलिम्॥

संपाएमि । तदो मविसेसं आउदिं जेव्व आदिसेहि से । जं किल तं इदोअदो अस्सेसामि । (५५)

सीता । (निःश्वस्य सविवेकम् ।) दुरासामेत्तं एदं । (५६)

(संस्कृतेन ।)

कौलीनेन कलङ्कयिष्यति कुलं किं मादृशी तादृशं
लज्जां वाप्यवलाजनस्य सहजां त्यक्ष्यत्यहो दुस्त्यजाम् ।

(सौत्सुक्यम् ।)

चेतः प्रेमवशंवदं सपदि मे चेतस्तदीयं पुन-
र्नो जाने सखि ! किं विधेयमधुना हा हन्त सञ्चिन्तय
(इति विषादं रूपयति ।)

सूनृता । (स्वगतम्) अहो प्पमादो । रक्खिदव्वा पहुदि-पेल्लवा पिअसही । (प्रकाशम् । सहि ! एव्वंणेदं ।

सिविणअदिट्ठे राओ
तुह उण अङ्गं सिरीससुउमारं ।
विसमो मअणहुआसो
आवड्डिअं मङ्गलं किंपि ॥

(५५) सूनृता । प्रियसखि ! मा विषादं कुरुष्व । विप्रतीपमपि कुमारं वशीकृत्याभिलषितं तव सम्पादयामि । ततः सविशेषमाकृतिमेवादेश्य तस्य । यत् किल तमितस्ततोऽन्वेषयामि ।

(५६) सीता । दुराशामात्रमेतत् ।

असं च।

रइवइ-भूवइ-सइवो
परहुअ पञ्चमकला-गरुप्पाओ।
णेओ पसूणकालो
मलआणिल-गाहिअक्खन्धो॥ (५७)

सीता। (दीर्घं निःश्वस्य।) किं पुण अप्पडिकज्जो मे आअङ्को। सव्वहा पुण्णमणोरहो किदन्तो। (विभाव्य।) सहि! ता अज्ज कहं सहदु णाम पत्थरस्स विअ भारं पेम्मस्स मे हिअअं। (५८) (इति वैक्लव्यं नाटयति।)

सूनृता। (आश्वास्य।) अइ मुद्धे! ण क्खु अप्पडिकज्जो त्ति तक्केमि। (स्मितं विधाय।) सहि! वण्णेहि केत्तिओ क्खु दे पेम्मस्स भारो त्ति। (५९)

(५७) सूनृता। अहा प्रमादः। वञ्चितव्या प्रकृतिपेलवा प्रियसखी। सखि! पठ्यतेतत्। तथापि।

स्वप्नदृष्ट रागलव पुनरङ्ग शिरीषसुकुमारम्।
विषमां मदनदशाम् आपतितं सङ्कट किमपि॥

अन्यच्च।

रतिपतिभूपतिसचिवः परभृतपञ्चमकलागुरुप्रायः।
नेयः प्रसूनकालो मलयानिलयाहितस्कन्धः॥

(५८) सीता। किं पुनरप्रतिकार्यो मे आतङ्कः। सर्वथा पूर्णमनोरथः कृतान्तः। सखि! तदद्य कथं सहतां नाम प्रस्तरस्येव भारं प्रेम्णो मे हृदयम्।

(५९) सूनृता। अयि मुग्धे! न खल्वप्रतिकार्य इति तर्कयामि। सखि! वर्णय कियान् खलु ते प्रेम्णो भार इति।

सीता । हला कीस मं उवहसेसि ।

सक्कइ ण हु वस्मेउं
　　भारो पेम्मस्स अद्धमेत्तो वि ।
णीसा गणन्ति णिच्चं
　　धणं तु धणिणो ण पेक्खन्ति ॥

(स्वगतम् ।) जं सच्चं । अप्पत्तमत्ताघादो हि पेक्खिअ खदङ्कं हसेदि दाव जणो । (६०)

रामः । हृदयङ्गमः परिहासः । (सासूयमिव ।)

परिम्लानैरङ्गैर्मृदितनलिनीपत्रतुलितै-
　　र्यदेथं कल्याणी कुसुमशरतापं कलयति ।
कपोले लावण्यं ललितनवलीपाण्डुरमिदं
　　सितच्छत्रं तत्राकृत किमु कृते तस्य कृतिनः ॥

गोमुखः । (सहर्षम् ।) भो वअस्स ! तुमं क्खु जुअराओ, तदो सिअच्छत्तं तुम्हारिसस्स संभवइ । (६१)

(६०) सीता । हला कथान्मामुपहससि ।
　　शक्यते न खलु नर्मयितुं भारः प्रेम्णोऽर्धमात्रोऽपि ।
　　निःस्वा गणयन्ति नित्यं धनं तु धनिनो न पश्यन्ति ॥
यत् सत्यम् । अप्राप्तमस्त्राघातो हि प्रेक्षा चताङ्कं हसति तावज्जनः ।

(६१) गोमुखः । भो वयस्य ! त्वं खलु युवराजः, ततः सितच्छत्रं युष्मादृशस्य सम्भवति ।

रामः । (सप्रसादम् ।) सखे ! गोमुख ! अत एव खलु मधुमुखोऽसि त्वम् ।

(नेपथ्ये ।)

हला लवङ्गि ! अवि मुणसि अज्ज किं णिमित्तं भट्टिदारिआए परिहिज्जइ णाम सिणाणवेला । (६२)

सूनृता । (कर्णं दत्त्वा ।) पिअसहि ! अवि सुदं । णं तुरिदं जेव्व गच्छिदव्वं । (६३)

सीता । हन्त सुदं । (सोच्छ्वासम् ।) सहि ! अज्ज पहुदि सिणाणपाणादिअं सव्वं दाव विसज्जिदं मए । तह वि गच्छिस्सं । (६४) (इत्युभे निष्क्रान्ते)

रामः । (स्वगतम् ।) कथं तावदन्तर्हितेव मे नेत्रकौमुदी ।

(प्रविश्य ।)

लक्ष्मणः । (ऊर्ध्वतोऽवलोक्य ।) कथमुज्जृम्भित एव दिनयौवनारम्भः । आर्य ! तदयं माध्यन्दिनकृत्यनिर्वर्तनाय गमिष्यामस्तावत् ।

(६२) हला लवङ्गि ! अपि जानास्यद्य किं निमित्तं भर्तृदारिकायाः परिह्रीयते नाम स्नानवेला ।

(६३) सूनृता । प्रियसखि ! अपि श्रुतम् । ननु त्वरितमेव गन्तव्यम् ।

(६४) सीता । हन्त श्रुतम् । सखि ! अद्य प्रभृति स्नानपानादिकं सर्वं तावद्विसृष्टं मया । तथापि गच्छामि ।

गोमुखः । (तथेवोहोच्य ।) महदी वेला वट्टइ । (६५)

रामः । बाढ़म् । (सर्वतो दत्तदृष्टिः ।) हन्त तिलकयति

भगवान् मध्यभागमम्बरश्रियो वासरमणिः । इतो हि,

आदितो नितरां वृद्धिः क्षयार्थमुपजायते ।
इति च्छाया विटपिनां मूलमेवावलम्बते ॥

(इति निष्क्रान्ताः सर्वे ।)

इति स्वप्नकथनो नाम प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ।

(ततः प्रविशति गोमुखेन सह सोत्कण्ठो रामः ।)

रामः । सखे ! गोमुख ! तत्र खलु पुनरप्रमत्तेन भवितव्यम् ।

गोमुखः । (विहस्य ।) ण क्खु मए तुए विअ गहीदो पहो उम्मत्ताणं । जिणा उण सिच्छावेसि मं । (१)

(६५) गोमुखः । महती वेला वर्तते ।
(इति प्रथमोऽङ्कः ।)

(१) गोमुखः । न खलु मया त्वयैव गृहीतः पन्था उन्मत्तानाम् । येन पुनः शिक्षयसि माम् ।

रामः। (स्वगतम्।) किं नु खलु मे सीतासन्दर्शनादृते विनोदनमन्यत्। (चिन्तामभिनीय।) श्रुतं हि वृक्षवाटिकायामत्रैव सन्निहितया तया भवितव्यमिति। भवतु। यावदेनामन्विष्यामि। (परिक्रम्यावलोक्य च।) अये लब्धा मे लोचनयोः पारणा। (प्रकाशम्।) वयस्य! एषा खलु सरसः परिसरे परिदृश्यमानकुसुमास्तरणशुभ्रोपलफलकसनाथमतिमुक्तलतामण्डपमध्यास्य प्रियसख्या तावदन्वास्यते। आवां खलु कदलीगुल्मान्तरितौ श्रोष्यावस्तावदनयोर्विश्रम्भभणितानि। (इति तथा कृत्वा स्थितौ।)

(ततः प्रविशति यथोक्तव्यापारा सह सख्या सीता।)

सूनृता। (सीतायाः पादतलं पाणिपल्लवेनामृशन्ती सस्नेहम्।) सहि! जाणइ! अदि बाहेदि दे चलणा दब्भङ्कुरदंहो। (२)

सीता। हला सुणिदे! किमेवं अजुत्तं पुच्छसि। ण हि कुसमुईवेह्नो आसीविससविसजजरिददेहं वि जणं संदवेदि णाम। ण क्खु पेक्खिवदं।

असणि-पहुच्छण-करआ-

वरिसण-बाहा-सआसुन्ती।

(२) सूनृता। सखि! जानकि! अपि बाधते ते चरणौ दर्भाङ्कुरवेध:।

णव-घण-पसाअ-लुद्धा
कआ पि किं चाअई भाइ॥ (३)

( इति नेत्रे निमील्य चिन्तां रूपयति। )

गोमुखः। भो वअस्स ! पेक्ख। एत्थ हि णिरन्तर-सारणी-सेअ-सुउमारासु वच्छवाडिआ-वसुन्धरासु अहिअदर-वित्थारो सुरहि-समआरम्भो। तहा हि। इदो वि अविरल-मञ्जुल-कुसुम-मञ्जरी-भार-भुग्ग-विडव-णिउरम्ब-चुम्बिअ-भू-विभाओ परभाअ-णीअ-मन्दन्तामन्द-मरन्द-बिन्दु-सन्दोहदुद्दिणो क्खु अअं इन्दिन्दिराणं कुलमाणन्देइ दाव अदिमुत्तलदामण्डवो। (४)

रामः। ( निरूप्य सौरभाघ्राणमभिनीय च। सश्लाघम्। )

धन्यासि माधवि ! लतासु समं समन्तात्
सर्वासु ते परिमलैः सुरभीकृतासु।

(३) सीता। हला सुवृत्ते। किमेवमयुक्तं पृच्छसि। नहि कुसुमसूचीवेध आशीविष विषज्वालैर्देहमपि जनं सन्तपति नाम। न खलु प्रेक्षितम्।

अशनिप्रभञ्जनकरकावर्षगणाघातेभ्यः।
नवघनप्रसादलुब्धा कदापि किं चातकी बिभेति॥

(४) गोमुखः। भो वयस्य। पश्य। अत्र हि निरन्तरकुल्यासेकसुकुमारासु इक्षुवाटिकावसुन्धरास्वधिकतरविस्तारः सुरभिसमयारम्भः। तथाहि, इतो प्यविरल-मञ्जुलकुसुममञ्जरीभारभुग्नविटपनिकुरम्बचुम्बितभूविभागः परभागनीतस्यन्दमाना मन्दमरन्दबिन्दुसन्दोहदुर्दिनः खल्वयमिन्दिन्दिराणां कुलमानन्दयति तावदति-मुक्तलतामण्डपः।

नासादयन्ति भवतीमविशेषमुग्धा
गन्धानुसारसरणी भ्रमरा भ्रमन्तः ॥

सीता। ( नेत्रे उन्मील्य । ) सहि ! केत्तिअं जाव कालं एवं वो आआसेमि । किं णु वा विद्दुए विहए पिंजर-बन्धेण । (५)

सूनृता। (आश्वास्य ।) सहि ! मा एव्वं मन्तेहि । चिन्तेमि दाव अब्भुवाअं। (६)

सीता। ( उत्कण्ठामभिनीय । ) हला ण क्खु बुज्झइ, किंणिमित्तं अज्जा बुद्दिसेणा जोईसरीए अज्ज आआ-विदेत्ति । (७)

सूनृता। किंपि अहिमदं भवे । (८)

सीता। हला ण आणे कीस विलोअणेसु आलिहिदो । (९)

( इति दृष्टिक्षेपं रूपयति । )

सूनृता। पिअसहि ! सावसेसं विअ वअणं । (१०)

(५) सीता। सखि ! कियन्तं यावत्कालमेवं व आयासयामि । किं नु वा विद्रुते विहगे पिञ्जरबन्धेन ।

(६) सूनृता। सखि ! मैव मन्त्रयस्व । चिन्तयामि तावदभ्युपायम् ।

(७) सीता। हला न खलु बुध्यते, किंनिमित्तमार्या बुद्धिषेणा योगीश्वर्यामाकारितेति ।

(८) सूनृता। किमप्यभिमतं भवेत् ।

(९) सीता। हला न जाने कस्मादिह लोचनयोरालिखितः ।

(१०) सूनृता। प्रियसखि ! सावशेषमिव वचनम् ।

( नेपथ्ये। गीयते। )

शम्भो महेश शिव शङ्कर शशाङ्क-

विभूषण परावर।

पतितपावन पाशनाश विश्वनाथ

वितर सुरवृन्दवन्द्य सुतायामिह कारुण्यमीश्वर॥

( उभे कर्णं दत्त्वा तन्मयतां रूपयतः। )

सूनृता। सहि! तालो क्खु चउत्तालोत्ति विभावेमि। एत्थ उण किंणामधेआ राइणी। (११)

सीता। राइणी दाव गोड़सारङ्गी णाम। ( सानन्दम्। ) अम्मो। इमिणा खणस्स वअं सङ्गीदेण अवहिदहिअआओ संवुत्ता। अहवा किं दाव अच्छरीअं। (१२) ( संस्कृतेन। )

सुकण्ठकण्ठसङ्गीत-गीताम्बुहरन्ति जन्तवः।

नद्यपानि प्रतीपन्ति ग्रावाणोऽपि द्रवन्ति च॥

( ततः प्रविशति करक्षताक्षमाला, शम्भो महेशेति गायन्ती योगिनी बुद्धिषेणा। )

सीता। ( दूरतो विलोक्य ससम्भ्रमं मृणालवलयादिकमुत्-

(११) सूनृता। सखि! तालः खलु चतुस्ताल इति विभावयामि। अत्र पुनः किंनामधेया रागिणी।

(१२) सीता। रागिणी तावद्गौडसारङ्गी नाम। अम्मो। अनेन क्षणस्य वयं सङ्गीतेनापहृतहृदये संवृत्ते। अथवा किन्तावदाश्चर्यम्।

सायं च।) सहि! समागदा संगीदाचारिया मे अज्जा बुद्धिसेणा। (१३) इति सूनृतां चाक्षयति।)

(उभे उत्तिष्ठतः।)

सीता। (अग्रतो गत्वा।) अज्जे! वंदामि। (१४) (इति सपादस्पर्शं प्रणमति।)

बुद्धिषेणा। महाभागे! अभीप्सितफलभाजनं भूयाः।

सीता। (तां हस्ते गृहीत्वा परिक्रम्य च।) एत्थ उवविसदु तत्थभोदी। (१५) इति सरसीतटशिलायां सर्वा उपविशन्ति।)

गोमुखः। (संलक्ष्य।) भो वअस्स! एत्थ उण गंगाजउणाहिं सरस्सईए सम्भेओ संवुत्तो दाव। (१६)

रामः। (दृष्ट्वा। स्वगतम्।) अहो नु खलु प्रशान्ततरमस्या दर्शनम्। किञ्च।

पश्यामि बुद्धिषेणाख्यामेनामेणाजिनाम्बराम्।
अङ्गदाहादनङ्गस्य रतिं संन्यासिनीमिव॥

---

(१३) सीता। सखि। समागता सङ्गीताचार्या मे आर्या बुद्धिषेणा।

(१४) सीता। आर्ये। वन्दे।

(१५) सीता। अत्रोपविशतु तत्रभवती।

(१६) गोमुखः। भो वयस्य! अत्र पुनर्गङ्गायमुनाभ्यां सरस्वत्याः सम्भेदः संवृत्त स्तावत्।

गोमुखः । ( निपुणं निर्वर्ण्य । ) भो वअस्स ! पेच्छ पेच्छ । णं पव्वइआ क्खु एसा विद्दुमारुणाहरपल्लवा उज्जलदर-कोमलबाहुलदा मच्चं पच्चच्छं विअ उज्जाणदेअदा पडिभाइ । णूणं एसा पच्चाएसो रूववईणं । (१७)

रामः । अस्तु । न खलु निर्वर्णनीयाः परस्त्रियः ।

बुद्धिषेणा । ( सनिर्वेदम् । )

या तत्त्वबोधं मुहुरावहन्ती
विदूरयन्ती सुतरामविद्याम् ।
तां ब्रह्म साक्षादनुभावयन्तीं
नमामि कामं किल योगचर्याम् ॥

( स्वगतम् । ) अहो नु कामं मे व्रतावदानपरम्परा-स्मृतिरपि नितरां प्रीतिमावहति । अतिमहति खलु ब्राह्मणकुले सञ्जातेनापि विजातीयधनाशावशंवदेन पितृव्येण बालविधवापि कौमारव्रतधारिणीति प्रख्या-पितव्यपदेशाहं योगपरिचयापदेशतस्तेनैवास्मि भगवत्याः

मैत्रेय्याः पादचर्यायै यदुद्दिश्य नियोजिता ।
अद्यापि तत् कथं नैति पापाया विस्मृतिं मम ॥

(१७) गोमुखः । भो वयस्यपश्य पश्य । ननु परिव्राजिका खल्वेषा विद्रुमारुणा-धरपल्लवोज्ज्वलतरकोमलबाहुलता सत्य प्रत्यक्षमिवोद्यानदेवता प्रतिभाति । नूनमेषा प्रत्यादेशो रूपवतीनाम् ।

(निःश्वस्य।) हा हन्त यावत्तिथक्लेशप्रभ्रष्टसंसारसौख्यस्यापि मादृशजनस्य किंवा पुनः प्रभुहृदयावर्जनकामनया नाम। (विचिन्त्य।) एवमेते हि मरीचिकाप्रायाः खलु विषयोपभोगाः, येभ्यो बीभत्समानाः सर्वान् विसृज्य कामान् प्रविशन्ति काननं वैखानसाः। (सानुतापम्।) धन्यो हि सज्जनसंसर्गः। येनाद्य सैवाहमस्मि खल्वीदृशी संवृत्ता। किञ्च। (प्रकाशम्।)

पुनाति चित्तं विधुनोति पापं
　　वृणाति शान्तिं वितनोति मैत्रीम्।
भक्तिं महेशे च युनक्त्यजस्रं
　　किं किं न कुर्यादिह पुण्यसङ्गः॥

सीता। (साकूतम्।) अज्जे! अवि आसि क्खु अज्ज किमत्थं तत्थभोदी जोईसरीए सुमरिदा दाव। (१८)

बुद्धिषेणा। (सस्मितम्।) वत्से! त्वमेवादौ कथय वचनाशेषम्।

सीता। (स्वगतम्।) कहंविम अज्जाए सुदं मे वअणं।

(१८) सीता। आर्ये! अप्यासीत् खल्वद्य किमर्थं तत्रभवती योगीश्वर्या स्मृता तावत्।

होदु । पच्छादेमि णं । ( प्रकाशम् । ) वल्लहो रत्तासोओ । एस एव्व अवसेसो । (१९)

रामः । तदिदं चतुरतरमुपक्रान्तमनया । न खलु मीनाः सन्तरणाय शिक्षामपेक्षन्ते ।

सूनृता । ( आत्मगतम् । ) अम्मो । चादुरीधुरीणत्तणं सीदाए । (२०) (इति तस्या मुखमवलोकयन्ती स्मयते ।)

सीता । ( अक्षिसंज्ञया सखीं निवार्य । बुद्धिषेणां प्रति । ) अज्जे ! विरमेदु अवदेसादो । कहेदु दाव एण्हिं आआरणकारणं । (२१)

बुद्धिषेणा । (चित्रफलकमुद्घाट्य ।) इदमाकारणकारणम् । ( इति दर्शयति । )

सीता । ( विलोक्य । सपुलकमात्मगतम् । ) कहमेदस्स आउदो मिविणअदिट्ठस्स विअ जणस्स संवादिणी । अम्महे । तस्स एव्व पडिमा । होदु । अलिअमुद्धत्तणमवलम्बिअ चिरं पेक्खामि । ( सवितर्कम् । ) किं णु माणुसो क्खु एसो । (सावहित्थम् । प्रकाशम् ।) अज्जे !

(१९) सीता । कथमिवार्यया श्रुतं मे वचनम् । भवतु । प्रच्छादयाम्येतत् । वल्लभो रक्ताशोकः । एष एवावशेष ।

(२०) सूनृता । अम्मो । चातुरीधुरीणत्वं सीतायाः ।

(२१) सीता । आर्ये । विरमतु व्यपदेशात् । कथयतु तावदिदानीमाकारणकारणम् ।

कहेउ जाव को एसो केणक्खाणेण विक्खुओ ।

कस्स वा कुलजोइक्को एत्थ वालिहिओ कहं ॥ (२२)

बुद्धिषेणा । (स्वगतम् ।) ज्ञायते न ह्यस्य विशेषतो व्यपदेशः

भवतु । सामान्यशब्देन यावत् कथयामि । (प्रकाशम् ।)

स्वप्ने खलु कयाचित् सम्भावितोऽसौ राजकुमारः ।

सीता । (अनाकर्णितकेन चित्रं पश्यन्ती हृदि करतल-

मारोप्य । स्वगतम् ।) हिअअ ! किमेवं वेवसि । (२३)

(आधिमभिनीय । संस्कृतेन ।)

चित्रं चित्रोल्लिखितोऽ-

प्यपत्रपां मे विदूरयन्नेषः ।

मन्ये मानसजन्मा

मानसमुन्माथयत्यद्य ॥

(इति सूनृतां विलोकयति । )

सूनृता । (बुद्धिषेणां प्रति ।) अज्जे ! तत्थभोदीए हत्ये वि

(२२) सीता । कथमेतस्याकृतिः स्वप्नदृष्टस्येव जनस्य संवादिनी । अम्महे । तस्यैव प्रतिमा । भवतु अलीकमुग्धत्वमवलम्ब्य चिरं पश्यामि । किं नु मानुषः खल्वेषः । आर्ये !

कथयतु यावत् क एष केनाख्यानेन विश्रुतः ।

कस्य वा कुलदीपोऽत्र वालिखितः कथम् ॥

(२३) सीता । हृदय । किमिवं वेपसे ।

एदं त्ति कोदुहलं जेव्व पुच्छावेदि मं । अवि कधं णु होदि चित्तगदो एसो । (२४)

सीता । (आत्मगतम् ।) हिअअ ! मा उत्तम्म । तुज्झ पडिट्ठं सुणिदा मन्तेदि । (२५)

बुद्धिषेणा । (सस्मितम् ।) ननु कथमसौ चित्तगतोऽपि वत्सायाः ।

सीता । अज्जे ! सुणिदाए दाव एवं पुच्छिदं, एसो क्खु चित्तफलअगदो कहं णु होदि । अत्थभोदीए पुणो अस्सहा तक्किदं । (२६)

बुद्धिषेणा । एवमपि वाक्यार्थः सम्भवति ।

गोमुखः । भो वअस्स ! अवि किं दंसणणिमित्तं सवलक्कारं गेण्हिअ उवणेमि दे चित्तफलअं । (२७)

रामः । अभूमिरियमविनयस्य । (सकौतुकम् ।) सखे ! आकर्णैतत् कर्णयुगलमुत्पाटयिष्यति राजा ते जनकः ।

(२४) सूनृता । आर्ये । तत्रभवत्या कस्तेऽप्येतदिति कौतूहलमेव प्रच्छयति माम् । अपि कथं नु भवति चित्रगत एष । (पाठे चित्तगतः ।)

(२५) सीता । हृदय । मोत्ताम्य । तव प्रतीष्टं सूनृता मन्त्रयते ।

(२६) सीता । आर्ये ! सूनृतया तावदेवं पृष्टम्, एष खलु चित्रफलकगतः कथं नु भवति । अत्रभवत्या पुनरन्यथा तर्कितम् ।

(२७) गोमुखः । भो वयस्य ! अपि किं दर्शननिमित्तं सबलात्कारं गृहीत्वोपनयामि ते चित्रफलकम् ।

गोमुखः । ( दन्तैर्जिह्वामवष्टभ्य । साशङ्कम् । ) वअस्स ! अहं उण सिविणअगअमुद्दिसिअ भणामि । (२८)

( रामो हसति । )

सीता । ( निपुणं निरूप्य । ) अम्मो । इदो अक्खराइं वि दीसन्ति । ( सकौतुकं वाचयति । )

स्वप्नेऽपि रमते यत्र प्रकृत्या निर्मलं मनः ।
सतीनामस्ति सम्बन्धः कोऽपि तत्र पुरातनः ॥

( सहर्षम् । ) साहु जोईसरि । साहु । (२९)

बुद्धिषेणा । ( निध्याय । स्वगतम् । ) स्थाने खल्वियं सखीजनविस्रम्भसेव्यतां नीता ।

यद्यपि ज्ञायते तैस्तैरुपोद्घातैरसंशयम् ।
अनया सत्कृतः कोऽपि स्वप्नेऽसौ नृपनन्दनः ॥

तथापि निरवशेषं ज्ञातुमिच्छामि । (प्रकाशम् । ) वत्से ! वैदेहि ! तवेयं देहावस्थैव मामेवं पुनः प्रश्नकर्मणि नियोजयति ।

श्लाघसि कामं सुभगे !
कुतो नु परिभुक्तमौक्तिकालीव ।

(२८) गोमुखः । वयस्य । अहं पुनः स्वप्नगतमुद्दिश्य भणामि ।
(२९) सीता । अम्मो । इतोऽक्षराण्यपि दृश्यन्ते । साधु योगीश्वरि ! साधु ।

कस्मात् क्षाम्यसि नितरां
निदाघदिनगिरिनदीप्राया ॥

( सीता ह्रियावनतमुखी भवति । )

बुद्धिषेणा । सूनृते ! ननु सख्यास्ते
तदकुण्ठं समुत्कण्ठा-निमित्तं परिकीर्तय ।
मूकीकरोति सुतरामेनां तावदपत्रपा ॥

सूनृता । अज्जे ! कीस ण कहइस्सं । णिसामेदु । (३०)

बुद्धिषेणा । अवहितास्मि ।

सीता । ( सुसंवृतवदनविन्यस्ताङ्गुलिभङ्गं सखीं निवार्य । सवैमनस्यमिव । ) अज्जे ! किंनिमित्तं पेसिदं दाव अन्तिअं मे चित्तफलअं भअवदीए । (३१)

बुद्धिषेणा ! वत्से ! अहमिव त्वमपि जानास्येव ।

सीता । (अनाकर्णितकेन ।) अहकिं । (३२) (इति लज्जते ।)

बुद्धिषेणा । ( साकूतम् ! ) सूनृते ! तव सख्याप्यङ्गीकरणमुखेन वृत्तान्तः प्रकटीकृतप्राय एव । न खल्वधुनापि कथयमि ।

(३०) सूनृता । आर्ये ! कस्मान्न कथयिष्यामि । निशामयतु ।
(३१) सीता । आर्ये ! किंनिमित्तं प्रेषितं तावदन्तिकं मे चित्रफलकं भगवत्या ।
(३२) सीता । अथकिम् ।

सूनृता । (जनान्तिकम् ।) पिअसहि ! हिअअणिव्विसेसे विजणे तुज्झ आसङ्का । ( आलेख्यमालक्ष्य । प्रकाशम् । ) एक्कसि पहादसिविणे संभाविअ एस वरणमालाए । जणअसुदाए सुहओ । (२३) ( इत्यर्धोक्ते । )

सीता । (सभ्रूभङ्गम् ।) अलिअजंपिणि ! किं मन्तेसि । (२४)

सूनृता । ( दरस्मितम् । ) मए सहीए मअंवरिओ । (२५)

बुद्धिषेणा । ( सहासम् । ) सूनृते ! साधु । निपुणासि परिहृत्तिविधाने ।

सूनृता । तदो आरब्भिअ पज्जुस्सुआ एसा पुरा विअ ण हु अअगवं परिचरेदि णाम । (२६)

बुद्धिषेणा । प्रणिधाय । स्वगतम् । ) ननु सूचितं भगवत्या, न ह्यस्य धनुर्भङ्गो दुष्करः । न खलु विश्वम्भराभारवहनं दुःखाकरोति नाम शेषस्येति ।

गोमुखः । श्रुत्वा किमिव स्मृत्वा च । ) हन्त भो वअस्स !

आणाहि इत्तिअघडणा

फुक्काकंखाविवड्ढिणी ज्जेव्व ।

(२३) सूनृता । एकदा प्रभातस्वप्ने सम्भावित एष वरणमालया । जनकसुतया सुभगो ( पक्षे जनकसुतायाः )

(२४) सीता । अलीकजल्पिनि ! किं मन्त्रयसे ।

(२५) सूनृता । मया सख्या स्वयंवृतः ।

(२६) सूनृता । तत आरभ्य पर्युत्सुका पुरेव न खलु भगवं परिचरति नाम ।

णिम्मीअइ रइवइणा
मअणुसअमेन्नाहिरोहिणी तुज्झ॥ (३७)

राम:। (भावमुन्नीय। दरस्मितम्।) सखे! सुतरामेव तव प्रखरतरासौ प्रतिभा प्रतिभाति।

(नेपथ्ये।)

आदिट्ठ म्हि हगे भट्टिदालिआइ चेढीमुहेण। यधा हण्डे शिआलिए। शालङ्किं शुअं च गेण्हिदाणि शिग्घं आअच्छशु त्ति। ता दाणिं कहिं णु देक्खिश्शामि भट्टिदालिअं णाम। (विचिन्त्य।) णं लुक्खवाडिआब्भन्तले कदावि कधं वि कुशुमाइं उच्चिणन्ती लदाउ शिञ्चन्ती वा कमलशलम्मि ण्हाणविहिं कलन्ती वा ण भोश्शदि त्ति तहिं य्येव्व गच्छिश्शामि। (३८)

सीता। (सोत्कण्ठमाकर्ण्य। दत्तदृष्टिः।) अए सिआलिआ पत्ता। (३९)

(३७) गोमुखः। हन्त भो वयस्य!
जानीहि तावद् घटना मिथ्याकारेण त्रिविधन्येव।
निर्मीयते रतिपतिना मृगदृशामधिरोहिणी तव।

(३८) आदिष्टास्म्यहं भर्तृदारिकया चेटीमुखेन, यथा हण्डे शृगालिके। सारिकां शुकञ्च गृहीत्वा शीघ्रमागच्छेति। तदिदानीं क्व नु द्रक्ष्यामि भर्तृदारिकां नाम। ननु उपवाटिकाभ्यन्तरे कदापि कथमपि कुसुमान्यवचिन्वन्ती लता सिञ्चन्ती वा कमलसरसि स्नानविधिं कुर्वन्ती वा मा भविष्यतीति तत्रैव गमिष्यामि।

(३९) सीता। अये शृगालिका प्राप्ता।

(प्रविश्य। सारिकाहस्ता।)

शृगालिका। (विलोक्य। स्वगतम्।) कधं इदो येव्व सुहं कीलन्ती सुणिदाइ अम्हे भट्टिदालिआ सव्वाइ अहिण-न्दिय्यमाणा बुद्दिसेणाइ पेम्मवीसडं किंपि जंपन्ती तलाअतडसिलादलं अलंकलदि। दाणिं अलाहि एदाणं णम्मलहस्सं भञ्जिदाणि। (विचिन्त्य।) ता याव उवसप्पामि। (तथा कृत्वा। प्रकाशम्।) येदु येदु भट्टिदालिआ। एसा सालंकी। सुए वि आणन्दमन्थले पुट्ठदो लहु लहु अणुसलदि। (४०) (इति पुरस्तात् सारिकां संरक्ष्य निष्क्रान्ता।)

सारिका। येदु येदु भट्टिदालिआ। (४१)

(प्रविश्य।)

शुकः। यअ यअ कुसुमिदलत्तासोअसण्णिहिदे! भट्टि-दालिए। (४२)

(४०) शृगालिका। कथमित एव सुखं क्रीडन्ती शृण्वत्यास्माकं भर्तृदारिकार्ययाभिनन्द्यमाना बुद्धिषेणया प्रेमविस्रब्धं किमपि जल्पन्ती तडागतटशिलातलमलङ्करोति। इदानीमलमेतासां नर्मरहस्यं भङ्क्त्वा। तद्यावदुपसर्पामि। जयतु जयतु भर्तृदारिका। एषा सारिका। शुकोऽप्यानन्दमन्थरः पृष्ठतो लघु लघु अनुसरति।

(४१) सारिका। जयतु जयतु भर्तृदारिका।

(४२) शुकः। जय जय कुसुमितरक्ताशोकसन्निहिते! भर्तृदारिके!

सीता। अच्छरीअं से विण्णत्तिणिउणत्तणं राअहंसस्स। अवसरो क्खु एसो परिणअस्स त्ति विण्णवेदि। (सारिकां प्रति।) सारिए! अहुणा किं अहिमदो दे परिणओ। (४३)

सारिका। भट्टिदारिआ जाव अलद्धमणोरहा दाव मे णाहिमदु। (४४)

गोमुखः। हुं, एसा वि घरदासिव्व गुललइ णाम सालंकी। (४५)

रामः। (सहर्षम्।) अहो, राजर्षिकुलसम्पर्केण तिरश्चामप्येवं शालीनतापरिचयः। श्लाघ्यं खलु पक्षिणोरेवंविधशिक्षादानकौशलम्।

गोमुखः। भो वअस्स! होइ क्खु केदईकुसुमसंसग्गेण खइर-सारस्स वि तारिसगन्धुग्गारो। (४६)

शुकः। भट्टिदारिए!

---

(४३) सीता। आश्चर्यमस्य विज्ञप्तिनिपुणत्वं राजहंसस्य। अवसरः खल्वेष परिणयस्येति विज्ञापयति। सारिके! अधुना किमभिमतस्ते परिणयः।

(४४) सारिका। भर्तृदारिका यावदलब्धमनोरथा तावन्मे नाभिमतः।

(४५) गोमुखः। हुम्। एषापि गृहदासीव चाटुकरोति नाम सारिका।

(४६) गोमुखः। भो वयस्य! भवति खलु केतकीकुसुमसंसर्गेण खदिरसारस्यापि तादृशगन्धोद्गारः।

अंपदि पलिणअणत्थं
　　अं तइ अणुदिणणिणेहपुट्ठाए !
अस्सेणिय्यदु अस्से
　　णवलि पुन्नाणि महेश्शाणि ॥ (४७)

( सीता निशम्य निःश्वस्य च मुखमालिन्यं सूचयति । )

रामः । वयस्य ! विदितम् ।

गोमुखः । भो चउद्दहविज्जाविअक्खणस्स वि दे वअस्सस्स किं णाम उण अविस्णाअं ४८

रामः । तर्हि तर्कय ।

गोमुखः । ( साहङ्कारम् । ) एसा सालंकी एसो क्खु सुओ । दुवेणं एदाणं णिव्वहणं चावसच्छिअं त्ति ण बुज्झइ । (४९)

रामः । ( स्मितं कृत्वा । )

वसुधायां वयस्यो मे दिवि देवगुरुस्तथा ।
द्वाविव खलु विद्वांसौ न तृतीयो जगत्त्रये ॥

---

(४७) शुकः । भर्तृदारिके ।
　　सम्प्रति परिणयनार्थमस्यास्त्वयानुदिनस्नेहपुष्टायाः ।
　　अन्विष्यतामन्योऽनन्तरं पुराणो महेश्वास ॥

(४८) गोमुखः । भोश्चतुर्दशविद्याविचक्षणस्यापि ते वयस्यस्य किं नाम पुनरविज्ञातम् ।

(४९) गोमुखः । एषा सारिका, एष खलु शुकः । द्वयोरेतयोः परिणयस्याप-साचिक इति न बुध्यते ।

सारिका । (कुपितेव ।) ण हु अदो वलं इह चिट्ठिस्सामि । (५०)

( इति पलाय्य कदलीगुल्मान्तरं विशति । )

( उभे पृष्ठतो धावतः । बुद्धिषेणा द्रुतपदं परिक्रामति । )

रामः । सखे ! किमत्र विधेयम् । यदित एव सर्वाः समापतन्ति ।

गोमुखः । अहुणा जंघाबलं ज्जेव्व सरणं । (हासं विधाय ।) भो वअस्स !

अज्ज अप्पड़िलोमाओ संवुत्ता देअदा तुह ।
मिग्गं हि रअणं हत्थे सअं ज्जेव्व उवत्थिअं ॥ (५१)

सीता । किञ्चिदग्रतो गत्वा ।) सारिए ! चिट्ठ चिट्ठ । कादव्वं क्खु तुज्झ एव्व समोहिदं । (पुरतो राममवलोक्य । सविस्मयहर्षमात्मगतम् ।) हीमाणहे । दिट्ठिआ पुप्फिदं मे मणोरहरुक्खएण । अज्ज क्खु अणुकम्पिद म्हि देव्वेण । (वक्षसि पाणिपल्लवमाधाय ।) हिअअ ! वड्ढसि णं दाणिं सिविणअदिट्ठजणस्स पच्चक्खपेक्खणेण । ( निर्वर्ण्य । सचमत्कारम् ।) अम्मो । इमस्स दाव,

(५०) सारिका । न खल्वतः परमिह तिष्ठामि ।

(५१) गोमुखः । अधुना जङ्घाबलमेव शरणम् । भो वयस्य !

अद्याप्रतिलोमाः संवृत्ता दैवतास्तव ।
मृग्यं हि रत्नं हस्ते स्वयमेवोपस्थितम् ॥

मुत्ती पसण्णगम्भीरा दिट्ठी धीराअदुज्जला।
कन्ती णीलमणिस्सामा वामाणं मणमोहिणी॥

(सोत्प्रेक्षम्।) जाणे सा हि णईणा पुहवी। जहिं क्खु रमणीअदरो णिवसेदि णाम ईरिसो जीओ। (५२)

(इति प्रतिपत्तिमूढेव स्रंसमानांशुका सपुलकमवलोकयन्ती स्थिता।)

रामः। (आत्मगतम्।) अहो नु खलु लब्धावकाशो मे मनोरथः। (निपुणं निरूप्य।)

किमियं विग्रहवती साक्षात् सौन्दर्यदेवता।
शान्तिः शरीरिणी किं वा मूर्तिर्वा प्रेमसम्पदः॥

(इति साभिलाषं प्रत्यवलोकयति।)

(सीता सकृदेव दृष्टिं परावर्तयति।)

रामः। (स्वगतम्।)

(५२) सीता। सारिके। तिष्ठ तिष्ठ। कर्तव्यं खलु तवैव समीहितम्। हीमाणहे। दिष्ट्या पुष्पितं मे मनोरथवृक्षेण। अथानुकम्पितास्मि दैवेन। हृदय! वर्धसे नन्विदानीं स्वप्नदृष्टजनस्य प्रत्यक्षदर्शनेन। अम्मो। अस्तु तावत्

मूर्तिः प्रसन्नगम्भीरा दृष्टिर्धीरायतोज्ज्वला।
कान्तिर्नीलमणिश्यामा वामानां मनोमोहिनी॥

जाने सा हि नवीना पृथिवी। यत्र खलु रमणीयतरो निवसति नामेदृशो जीवः।

अहो नु दृष्टिर्हरिणीदृशो मे
　　लीलावलोकार्थमितो निवृत्ता ।
प्रतिप्रवाहं प्रसृताप्यकस्मा-
　　न्निवर्तमाना शफरीव भाति ॥

सर्वास्ववस्थास्वनवद्यतरं रामणीयकमेतस्याः । तथा हि,

सदनं सुखस्य, सारः
　　स्मरस्य, नवयौवनस्य सर्वस्वम् ।
साफल्यमज्जजनुषो
　　यदमुष्या लोकितं किञ्चित् ॥

बुद्धिषेणा । (रामं विलोक्यात्मगतम् ।) दिष्ट्या संवदति खल्वस्य चित्रफलकोन्मीलितः शरीराकारः । (सहर्षम् ।) अहो नु समग्रसौभाग्यलक्ष्मीपरिग्रहेण किमपि नयनानन्दजननमेतस्य हि प्रतिप्रतीकनिर्माणम् । सर्वथा पुण्यानुभावदर्शनोऽयं महापुरुषः । स्थाने खल्वेतस्मिन्ननुरागबन्धो जानक्याः । अथवा किमत्र चित्रम् ।

　ग्रहेषु महनीयेषु विहाय मिहिरात्मजम् ।
　न जातु रमतेऽन्यत्र ज्योतिर्वलयमण्डली ॥

(प्रकाशम् ।) सूनृते ! दिष्ट्या वर्धामहे । स एवायम् ।

रामः । (सवितर्कम् ।) कुतः पुनरियं प्रत्यभिज्ञा ।

बुद्धिषेणा । यस्तव सख्या स्वप्ने चित्रे चावलोकितः ।

रामः । (सहर्षमात्मगतम् । श्रुतं हि श्रोतव्यम् । (विचिन्त्य ।)
न खलु दुरवापेयं ममाशंसा । कुतः ।

स्मरस्तापस्य हेतुर्मे स एवास्य निबर्हणः ।
हिमोत्पातजबाधाया हिममेव हि भेषजम् ॥
( निर्वर्ण्य । सोच्छ्वासम् । ) अये,
काञ्चनी पद्मिनी लोके श्रूयते न तु दृश्यते ।
किं मे मानसभूषार्थं सृष्टैषा विधिनाधुना ॥

सूनृता । (वीक्ष्य । स्वगतम् ।) संभावणीआणुभावा इमस्स आउदी । सुणिज्जइ णाम गुणाओ उण आउदिं जेव्व अणुरुन्धन्ति । ( प्रकाशम् । ) दिट्ठिआ उवगदा सहीए संजीअणोसही । सलाहणिज्जो क्खु से भावणुबन्धो । जं सच्चं, विज्जुल्ला वलाहअं उज्झिअ कहिं रमेदु णाम । (५२)

बुद्धिषेणा । अयि वैदेहि ! देहि तावन्नयनान्तमितः ।

अभिनवमरकतशृङ्ग-
च्छलाङ्गमङ्गीकरोति वानङ्गः ।

(५२) सूनृता । सम्भावनीयानुभावास्याकृतिः । श्रूयते नाम गुणाः पुनराकृतिमेवानुरुन्धन्ति । दिष्ट्योपगता सख्याः सञ्जीवनौषधिः । श्लाघनीयः खल्वस्या भावानुबन्धः । यतसत्यं, विद्युल्लता वलाहकमुज्झित्वा कस्मिन् रमतां नाम ।

एवं कमनीयरुचिः

शुचिस्मिते ! दृश्यते नान्यः ॥

( सीता तथैव सस्पृहं पश्यन्ती स्थिता । )

रामः । (स्वगतम् ।) तदिदानीं पीयूषासाराप्लवनेनेव दृगङ्गीकरणेन गाढ़ानुरागेणानया विधेयीकृतमिव मे हृदयम् ।

बुद्धिषेणा । सूनृते ! पश्याद्भुतं विनिमयम् ।

आसीत् पुरत एवासौ यस्याश्चित्रगतः पुरा ।
संप्रति प्रतिभात्यस्य चित्रन्यस्तेव सा पुनः ॥

सीता । (मुहूर्तमितिकर्तव्यतामूढ़तया स्तब्धेव । स्वगतम् ।) ण क्खु चन्दालोए चन्दमणिपुत्तली अप्पसिण्णा होदुं पहवेदि । (५४) (इति स्वेदानुबन्धं सूचयति । )

सूनृता । ( दृष्ट्वा । सानन्दम् । संस्कृतेन । ) अहो ।

स्वप्ने जाड्यादवशवपुषाश्लिष्ट एवानया यो
दृष्टश्चित्रे सुचिरमनृतं मौग्ध्यमालम्ब्य भूयः ।
दिष्ट्या सोऽयं सजलजलदश्यामलोऽस्याः प्रकामं
प्रेमार्द्रस्य स्फुरति पुरतो लोचनान्तस्य पश्य ॥

गोमुखः । ( परितो निरूप्य । स्वगतम् ) भूदप्पिआ संभा सण्णिहिआ वट्टइ । (प्रकाशम् ।) णं मिहिलेसराअदणं

(५४) सीता । न खलु चन्द्रालोके चन्द्रमणिपुत्तलिरप्रसिन्ना भवितुं प्रभवति ।

गओ वि कुमारलक्खणो कहमुब्भिण्णसिहरखंजरीडो विअ अदंसणो संवुत्तो। (दृष्टिक्षेपमभिनीय।) अए पत्तो हु एसो। (५५)

प्रविश्य।)

लक्ष्मणः। (राममुपगम्य।) आर्य्य! गृह्यतामियम्।

(सीता संभ्रान्तेव किञ्चिदपावर्त्तते।)

रामः। (सलज्जमिव। वत्स! अपि किं वदसि।

लक्ष्मणः। (स्वगतम्।, अहो अभिष्वङ्गः। दृढं यावदेष एतयापहृतः। (प्रकाशम्।) मिथिलेश्वरप्रसादभूता चम्पकमाला। (इति दर्शयति।

रामः। ʼनिरूप्य। स्वगतम्।, अहो नु खलु भोः।

सत्यं चम्पकमाला
काचन काञ्चनमयीव मे पुरतः।
इयमपरा सन्निहिता
चञ्चति सञ्चारिणी सेव।

(प्रकाशम्।) वत्स! देहि। (इति सानुरागं गृहीत्वा शिरसि धारयति।)

(५५) गोमुखः। भर्तृप्रिया सख्या सन्निहिता वर्त्तते। ननु मिथिलेश्वरायतनं गतोऽपि कुमारलक्ष्मणः कथमुद्भिन्नशिखरखञ्जरीट इवादर्शनं संवृत्तः। अयं प्राप्तः खल्वेषः।

सीता। (अपवार्य।) हला सुणिदे! को णु क्खु एसो महुरकण्ठो। (५६) (इति लक्ष्मणमीक्षमाणा तिष्ठति।)

सूनृता। (सोत्प्रासम्।) जाणे क्खु अश्रं उम्मिलाए सिविणअम्मि दिट्ठो भविस्सदि दाव। (५७)

सीता। (साधरोद्वर्तनम्।) सहीए वा। (५८)

सूनृता। (ईषत् स्मित्वा।) एव्वं वा होदु। (५९)

सीता। (स्वगतम्।) संभावेमि तदीओ क्खु अश्रं पस्सवत्ती अमुस्स बह्मणो वअस्सो त्ति। (६०)

(नेपथ्ये।)

देईणं आणत्ती। अवस्सं चेअ गन्तव्वं। (६१)

बुद्धिषेणा। (दत्तदृष्टिः।) अये नागरिकेयं द्रुतपदमायाति।

(प्रविश्य।)

नागरिका। जेदु जेदु भट्टिदारिआ। णेह-पल्लुअ-त्थणीओ अज्जुआओ दे आआरेन्ति। (६२)

---

(५६) सीता। हला सूनृते! को नु खल्वेष मधुरकण्ठः।

(५७) सूनृता। जाने खल्वयमूर्मिलया स्वप्ने दृष्टो भविष्यति तावत्।

(५८) सीता। सख्या वा।

(५९) सूनृता। एवं वा भवतु।

(६०) सीता। सम्भावयामि तृतीय खल्वयं पार्श्ववर्त्यमुष्य ब्राह्मणो वयस्य इति।

(६१) देवीनामाज्ञप्तिः। अवश्यमेव गन्तव्यम्।

(६२) नागरिका। जयतु जयतु भर्तृदारिका। स्नेहप्रस्नुतस्तन्यो- गुरुकास्त्वामाकारयन्ति।

सीता। (जनान्तिकम्।) सहि! सुणिदे! एसा क्खु दुट्ठचेड़ी णाअरिआ दाव उवत्थिदा। (दीर्घं निःश्वस्य।) तेण हि अम्माणमन्तिअं गदुअ ताहिं अब्भणुस्सादा मिहिलेसरवन्दणत्थं अणुकोसिईतीरं तदाअदणं गमिस्सामो। (साचिग्रीवमपाङ्गेन रामं पश्यन्ती। स्वगतम्।) अवि णाम णं तिल्लोअमोहणं पुणो वि पेक्खिस्सं। (प्रकाशम्।) हञ्जे गमिस्सं। (६२)

(इति सर्वाः सोत्कण्ठं परिक्रामन्ति।)

रामः। (वैचित्त्यादिव कतिचित् पदान्यनुसृत्य।) अयि,

तृष्णार्तेन मयैवं
हस्तानुसृता दुराशया सुतनु!।
सरसीभूय पुरस्तात्
सरसि नु दूरं मरीचिकाव्याजात्॥

गोमुखः। (निरूप्य। स्वगतम्।) हंहो। दासीए पुत्त!

(६२) सीता। सखि! सुकृते! एषा खलु दुष्टचेटी नागरिका तावदुपस्थिता। तेन हि अम्बानामन्तिकं गत्वा ताभिरभ्यनुज्ञाते मिथिलेश्वरवन्दनार्थमनुकौशिकीतीरं तदायतनं गमिष्यावः। अपि नामेनं त्रिलोकीमोहनं पुनरपि द्रक्ष्यामि। हञ्जे गच्छामि।

कन्दप्पहदअ! वेअसि उण महामदीणं वि विब्भमं कादुं। (६४)

सीता। (कर्णं दत्त्वा सव्यथमिवात्मगतम्।) हद्धी हद्धी। इणं सुणिअ ण मे चलणाओ पसरन्ति। (प्रकाशम्।) सहि! सुणिदे! बाहेदि मं पाअक्खम्भो। ता खणं चिट्ठ। (६५) (इति दरविवर्तितवक्त्रं नेत्राञ्जलिना रामरूपामृतं पिबति।)

गोमुखः। अम्मो। जाणई दाव तिरिच्छि-कडक्खसिंखलाहिं पिणद्धं करिअ पीअइ विअ वअस्सं। सङ्कमि डाइणी क्खु एसा। (६६)

सूनृता। (सीतां प्रति।) अइ अवङ्गरङ्गरङ्गिणि! किं दाणिं सअंवरा होदुमिच्छसि। ६७) (इति बुद्धिषेणामुखमुदीक्ष्य स्मयते।)

(६४) गोमुखः। हंहो दास्याः पुत्र। कन्दर्पहतक! वेत्सि पुनर्महामतीनामपि विभ्रमं कर्तुम्।

(६५) सीता। हा धिक् हा धिक्। इदं श्रुत्वा न मे चरणौ प्रसरतः। सखि! सूनृते! बाधते मां पादस्तम्भः। तत् क्षणं तिष्ठ।

(६६) गोमुखः। अम्मां। जानकी तावत् तिर्यक्कटाक्षशृङ्खलाभिः पिनद्धं कृत्वा पीयत इव वयस्यम्। शङ्के डाकिनी खल्वेषा।

(६७) सूनृता। अयि अपाङ्गरङ्गरङ्गिणि! किमिदानीं स्वयंवरा भवितुमिच्छसि।

सीता। ( स्वगतम्। ) किं वा अज्ज वि अवसिस्सदि। (६८)

( इति भ्रूभङ्गं कृत्वाङ्गुल्या तां पीड़यति। )

नागरिका। (निरीक्ष्यात्मगतम्। होउ दाव अणङ्गाआरिम्भ-विरइअ-मुद्ध महुरो पुव्वराअमङ्गसवो। किंतु वीअं गणिअण क्खु वराड़िआए उवलम्भो। (६९) ( इत्यञ्चलेन मुखमावृत्य हसति।

बुद्धिषेणा। (उभयोराकारं विदित्वा। स्वगतम्। नन्विमौ संवृत्तौ खलु मनोरथमात्रनिवृत्तव्यतिकरौ। ( निपुणं निर्वर्ण्य। ) प्रायेण मे प्रसव्यस्तकः। कुतः।

नेत्रान्तेन परस्पर-
मन्तरमाविश्य दूरतोऽप्याभ्याम्।
निष्पाद्यत इव गूढ़ं
परकीयतनौ प्रवेशोऽयम्॥

( इति सीता मद्देतराभ्यां दुःखेन परिक्रामति। नागरिका सारिकाशुकौ नाट्येन करगतौ विधाय प्रस्थिता। )

(६८) सीता। किंवाद्याप्यवशिष्यते।

(६९) नागरिका। भवतु तावदनङ्गाचार्यविरचितमुग्धमधुरः पूर्वरागमङ्गोत्सवः। किन्तु वीजं गणयित्वा खलु वराटिकाया उपलम्भः।

गोमुखः। हन्त पत्तट्ठस्स वि गरुआहिलासेण पेल्लिअस्स ईरिसो दाव चित्तविग्गोवो। (७०)

रामः। (अश्रुत्वैव निगृह्यात्मानमात्मगतम्।) अये सम्यगवबोधित इवास्मि केनापि। तथापि नात्मानं शक्नोमि निवर्तयितुम्। अपि च। कथं पुनः,

सीताप्रवणा वृत्ति-
मंनसोऽद्य मनस्विनोऽपि मेऽकस्मात्।

(विभाव्य।)

दिग्यन्त्रकण्ठकमुखं
द्रविणेशदिशं यतः श्रयति॥

(वीक्ष्य।) कथं तावदियं नयनपथमतिक्रान्तेव कान्ता। (इति विषादं रूपयति।)

लक्ष्मणः। (उदीचीमालोक्य। साश्चर्यम्) आर्य! पश्यतु तावत् प्रशस्यतरमिदं गौरीगुरोः सान्ध्यक्षणसौन्दर्यम्। अहो खलु,

(७०) गोमुखः। हन्त बहुशिक्षितस्यापि गुरुकाभिलाषेण पीडितस्येदृशः खलु चित्तव्याकुलभावः।

(इति द्वितीयोऽङ्कः।)

तुषारहिण्डीरकपाण्डुरापि
चण्डांशुतिर्यक्करमण्डितासौ ।
किं व्योमसिन्धोः किमु वा हिमाद्रेः
शृङ्गच्छलोत्तुङ्गतरङ्गभङ्गिः ॥

इति सर्वथा परिप्लवमानहृदयोऽस्मि संवृत्तः ।

रामः । (विलोक्य ।) अहो, उदाररमणीयाकृतोऽयं धराधरराजः । तथाहि ।

सहस्रदन्तकोच्छ्रायः सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषो विराडेष विराजते ॥

(नेपथ्ये । वैतालिकौ ।)

प्रथमः ।

पद्मिन्या विनियुज्य कोषभवने भृङ्गव्रजं यामिकं
सन्नद्धे खलु यामकुञ्जरघटागाढ़ान्धकारोत्करे ।
सोमच्छद्मनि कोकशोकदहने प्रोज्जृम्भमाणे शनै-
र्विश्रान्त्यै भुवनान्तरं प्रविशति स्वैरं ग्रहग्रामणीः ॥

द्वितीयः । पश्योन्मीलिततारा
तारापतिकरविमर्शहर्षेण ।
मुञ्चति रागवतीयं
जाड्येनेवाम्बरं सन्ध्या ॥

रामः । (श्रुत्वा दृष्टिं विधाय ।) अये कथमुदितभूयिष्ठो

भगवान् रोहिणीवल्लभः। (समन्तादवसन्ताविर्भावं विभाव्य। सखेदमात्मगतम्।) हा हतोऽस्मि।

आलिङ्गति नदी शैलं लताश्लिष्यति शाखिनम्।
अप्याधत्ते नवमधुर्नवौत्सुक्यमचेतसाम्॥

(सोत्कण्ठम्।)

तामिन्दुसुन्दरमुखीमरविन्दनेत्रा-
मालोक्य लोचनचकोरनिपेयकान्तिम्।
कामं निकामतरकामशरानुविद्ध-
स्वान्तस्य मे विषमयः समयः सुमानाम्॥

(प्रकाशम्।) वयस्य! गोमुख! साम्प्रतं सायन्तनकृत्यसम्पादनाय साधयामस्तावद्वयम्। (इति निष्क्रान्ताः सर्वे॥

इति परस्परसन्दर्शनो नाम द्वितीयोऽङ्कः।

## तृतीयोऽङ्कः।

(ततः प्रविशति सुप्तवणिग्जनविपणिस्थो यन्त्रदीपपाणिः प्रहरपालः।)

प्रहरपालः। (परिक्रम्य।) जाग्गरेहि भो। (समन्तादवलोक्य।) जाग्गरेहि भो। (अग्रतो गत्वा केतकगुल्मा-

भ्यन्तरं प्रोद्दीपितदीपालोकेन ससंभ्रमं संलक्ष्य । सहर्षम् । ) अहो महप्पहावो सामी । जं सच्चं ।

झुट्ठा हु चोरिआसङ्का रज्जे दुज्जणवज्जिदे ।

साहुणो वि णिगेह्णन्ति अम्हे उ दव्वलोलुवा ॥

( आकाशे । टुं टां ढुं । टुं टां ढुं । )

(आकर्ण्य ।) । उग्गच्छइ क्खु एसो गढ़मज्झादो घड़ीजन्तस्सणो । अदीदं दाव होरादुवअं रअणीपरद्धस्स । (जृम्भामभिनीय विभाव्य च ।) ण हु विभावेमि किमत्थं भट्टिणा रत्तिम्मि अज्ज विसज्जिदाओ दाव गढ़ब्भन्तरं कुमारीओ त्ति । (परिक्रम्यावलोक्य च । आकाशे ।) लवङ्गिए ! बलवं अस्सत्थसरीरा दाव अम्हाणं भट्टिदारिआ जाणइ । तिस्सा किदे सरसीदो णलिणीदलाइं समुणालाइं आणेउं गआ मे पिअसही मुणालिआ । अवि दिट्ठा तुमए । (कर्णं दत्त्वा ।) किं वुच्चइ । चिरेण कालेण चेअण पड़िणिउत्ता । हं वि आदिट्ठ म्हि अज्जाइ बुद्धिसेणाइ, जधा लवङ्गिए ! गच्छ सिग्घं । जोईसरस्स अस्समादो भअवदीए मेत्तेईए चलणुदअं समाहर । जेण णिराबाधं से सरीरं होज्जइ । ता तहिं चेअ गच्छिहिमि त्ति । ता तुरिअदरं गच्छ । सा हि देअस्स राएसिणो दुहुअं उस्ससिअं । अवि णाम तं चेअ

ओलम्बिअ तत्थभोदो इह-लोअ-णिवासवासणा । (१)
( इति परिक्रम्य निष्क्रान्तः । )

( प्रवेशकः । )

( ततः प्रविशति दुर्गपरिखाभ्यर्णतरसुवर्णाख्यसरणौ स्थिता नागरिका । )

नागरिका । (२) ( पेचकरावं सूचयित्वा संभ्रान्तेव सर्वतोऽवलोक्य च । ) सन्तं पावं । णं अहुणा वि णहङ्गणे णच्छत्तवुंदो गंदीणीइ विव अण्णोण्णं विणोएइ । पच्छा-

(१) प्रहरपालः । जागृहि भोः । जागृहि भोः । अहो महाप्रभाव स्वामी । यत्सत्यम् ।

अलीका खलु चौर्यशङ्का राज्ये दुर्जनवर्जिते ,
साधूनपि निगृह्णीमो वयन्तु द्रव्यलोलुपाः ॥

उद्गच्छति खल्वेष दुर्गमध्यादघटीयन्त्रस्वनः । अतीतं तु यद्धारात्र्यं रजनी-परार्धस्य । न खलु विभावयामि किमद्य भर्त्रा राजावद्य विसर्जितास्तावद्दुर्गाभ्यन्तरं कुमार्यं इति । लवङ्गिके । बलवदस्वस्थशरीरा तावदस्माकं भर्तृदारिका जानकी । तस्याः कृते सरसीतो नलिनीदलानि समृणालान्यानेतुं गता मे प्रियसखी मृणालिका । अपि दृष्टा त्वया । किमुच्यते । चिरेण कालेन गृहीत्वा प्रतिनिवृत्ता । अहमप्यादिष्टाऽऽर्यया बुद्धिषेणया, यथा लवङ्गिके ! गच्छ शीघ्रम् । योगाश्रमस्याश्रमाद्भगवत्या मैत्रेय्याश्चरणोदकं समाहर येन निराबाधं तस्याः शरीरं भवेत् । तत् तत्रैव गमिष्यामीति । तत त्वरिततरं गच्छ । सा हि देवस्य राजर्षेर्द्वितीयमुच्छ्वसितम् । अपि नाम तामेवावलम्ब्य तत्रभवत इहलोकनिवासवासना ।

(२) नागरिका । शान्तं पापम् । नन्वधुनापि नभोऽङ्गणे नक्षत्रवृन्दं चक्षुःस्थगनक्रीडयेवान्योन्यं विनोदयति । प्रक्षालयतीव निर्मलज्योत्स्नाजलधाराभिः

लेइ विव णिम्मलजुण्हाजलधाराहिं सव्वदो वि धरणीदलं भअवं रअणीकन्तो। णेन्ति अ देसन्तरं सिअब्भसअलाइं डिण्डीरपडलाइं विव मन्दाणिल-हिल्लूरीओ विअदस्सवस्स। (झिल्लीरअं सूचयन्ती।) अवि अ।

विविहारवपुण्णा वि एव्वं मोणव्वदं किमु।
ओलम्बइ तवोमग्गा पुहवी तावसी विव॥

ता णूणं अब्भहिअं गहिरा रत्ती। (चिन्तामभिनीय।) सिआलिआए पमुहादो सुणिअ मए क्खु तादिसेणावए-सेण भट्टिदारिआए सिविणअविलसिअं सव्वं चेअ लक्खिअ दाव। दाणिं उण इदिसी से सोअणिज्जा अवत्था। हन्त अदिमेत्तदुल्लहा क्खु तिस्सा हिअअणिहिआ अब्भत्थणा। ता देअदाओ क्खु अप्पडिलोमाओ होन्तु। (सवितर्कम्।) किंदिसो वा एणिहं पाडआरो।

सर्वतोऽपि धरणीतलं भगवान् रजनीकान्तः। नयन्ति च देशान्तरं सिताभ्रशकलानि डिण्डीरपटलानीव मन्दानिललहर्यो वियदर्णवस्य। अपि च।

विविधारवपूर्णाप्येवं मौनव्रतं किमु।
अवलम्बते तपोमग्ना पृथिवी तापसीव॥

तन्नूनमभ्यधिकं गभीरा रात्रिः। शृगालिकायाः प्रमुखादाकर्ण्य मया खलु तादृशेनापदेशेन भर्तृदारिकायाः स्वप्नविलसितं सर्वमेव लक्षितं तावत्। इदानीं पुनरीदृशी तस्याः शोचनीयावस्था। हन्त अतिमात्रदुर्लभा खलु तस्या हृदयनिहिताभ्यर्थना। तद्देवताः खल्वप्रतिलोमा भवन्तु। कीदृशो वेदानी

तक्केमि तस्स कुमालअस्स दिट्ठिराओ क्खु एत्थ सरणं। (विचिन्त्य।) सो पि वा कधं णाम णिप्पच्चूहं संपज्जइ। तत्थ उण एणो चेअ भट्टिणो पड़िबन्धो दाव। (विभाव्य। सहासम्।) अध किंवा ओल्लअ-वावारिणो बोहित्थवत्ताइ। (तुरगखुरक्षुण्णक्षौणीतलशब्दं संसूच्य नेपथ्याभिमुख-मवेक्ष्य च। सवितर्कम्।) अम्महे। को णु एसो णिक्कोस-करबाल-सोहमाण-करदलो बाण-बाणासण-सणाहो ससम्भाहो हआरोहणेण इदो चेअ आअच्छइ। इति भीतिं नाटयति। नेपथ्ये पुनो ध्वनिः।)

(ततः प्रविशति यथानिर्दिष्टः पुरुषः।)

पुरुषः (पार्श्वतो दत्तदृष्टिः।) सत्यं खलु,

राजन्तुच्चैर्वरणशिखरेष्वारमय्यः शतघ्न्यो
दिक्षु स्फारास्तिसृषु परिखा भुग्नभुग्नाः सरण्यः।
कौशिक्यम्भःस्तिमितचरणं कौशिकस्याप्यलङ्घ्यं
पद्माकारं स्फुरति सुतरां दुर्गमं दुर्गमेतत्॥

नागरिका। (२) (अग्रतो गत्वा। ससंभ्रमम्।) वन्दिज्जइ

प्रतीकार.। तर्कयामि तस्य कुमारस्य दृष्टिराग खल्वत्र शरणम्। सोऽपि वा कथं नाम निष्प्रत्यूह सपद्यते। तत्र पुन एष एव भर्तुः प्रतिबन्धस्तावत। अथ किं वाद्र कव्यापारिणो वहित्रवार्तया। अम्महे। को न्वेष निष्कोषकरबाल-शोभमानकरतलो बाणबाणासनसनाथ ससन्नाहो हयारोहणेन इत एवागच्छति।

(२) नागरिका। वन्द्यते कोष्ठपाल'।

कोट्टआलो। (इति दक्षिणपाणिं ललाटचुम्बिनं रूपयति।)

पुरुषः। (रश्मिं संयम्यात्मगतम्।) अये कुत इह सा नागरिका। भवतु। (प्रकाशम्।) भद्रे! अपि ते कुशलम्।

नागरिका। (४) (कथमपि प्रत्यभिज्ञाय। सभयं कृताञ्जलिः।) मरिसेउ दाव देओ दुव्विणीआए मज्झ अविणअं।

पुरुषः। (सप्रमादम्।) नास्त्यत्र खलु ते मनागप्यपराधः। (स्वगतम्।) उत्कण्ठते मे हृदयं सीतायाः शरीर-प्रवृत्तिमुपलब्धुम्। (विमनस्कतां रूपयन्।) अयमवसरः सम्यगनया संलपितुम्। (प्रकाशम्। साकूतम्।) भद्रे! अपि नामानामयस्ते भर्तृदारिकायाः।

नागरिका (५) (निःश्वस्य।) का णाम कथा अणामअस्स। णूणं जस्स हत्थे तिस्सा मणोरहो, सो क्खु चेअ वेअइ।

पुरुषः। (सोत्कलिकम्।) भद्रे! इह खलु कुतस्तावदेकाकिनी तिष्ठसि।

---

(४) नागरिका। मर्षयतु तावद्देवो दुर्विनीताया ममाविनयम्।

(५) नागरिका। का नाम कथानामयस्य। नूनं यस्य हस्ते तस्या मनोरथः, स खल्वेव वेद।

नागरिका। (६) ( विषादं रूपयन्ती बद्धाञ्जलिः। ) भट्टि-
दारिआए कए उसीरादिअसमाहरणस्स। (साग्रहम्।)
जइ इमिणा जणेण सोदव्वं, ता कहेउ किमत्थं देएण
वि एत्तिओ क्खु अङ्गीकिओ दाव आआसो।

पुरुषः। (सशोकमात्मगतम्।) हन्त बलवदस्वस्था मे मनोरथ-
प्रियतमा। ( सामर्षमिव। ) हंहो, तस्याः किल

बालप्रबालमृदङ्ग्याः काममङ्गेषु मन्मथ!।
सन्धत्से तीक्ष्णविशिखाननङ्गोऽसीति निर्भयम्॥

( नेपथ्ये। गीयते। )

हृदय निरन्तर-मुपसर शङ्कर-चरणसरोजमुदारम्।
प्रणतसुरासुर-शेखरभासुर-मणिमयमधुपविहारम्॥
जय मृत्युञ्जय काशिपते।
कुरु करुणामयि शरणगते॥

नौमि सुधाकर-मौलिमुमाकर-तालविलाससहासम्।
नवमुरजारव-नवनवताण्डव-चञ्चललोकनिवासम्॥
सुरसरसीजल-रभसमुच्छल-दुङ्गटजूटकटाहम्।
डमरुदिदिन्दिम-निनादमधुरिम मन्थररविरथवाहम्॥

(६) नागरिका। भर्तृदारिकायाः कृत उशीरादिकसमाहरणाय। यद्यनेन जनेन श्रोतव्यं, तत् कथयतु, किमर्थं दैवेनाप्येतावान् खल्वङ्गीकृतस्तावदायासः।

स्तवनपरायण-मुनिगणचारण-विरचितजयजयकारम् ।
फणिमणिमण्डन भवभयखण्डन खण्डय जनुरनुवारम् ॥

( उभौ श्रवणमभिनयतः । )

पुरुषः । ( स्वगतम् । ) अहो रागपरिवाहिनी गीतिः । असौ खलु कामिनीकण्ठ इति तर्कयामि । (क्षणं तूष्णीम्भूय निःश्वस्य च । प्रकाशम् । ) भद्रे ! तव खलु भर्तृदारिकायास्ते काचिदत्याहिताशङ्कैव निमित्तम् ।

नागरिका । ७ ( सोद्वेगम् । णं किदिसं क्खु अच्चाहिअं ।

पुरुषः । भद्रे ! शृणु । अद्य खलु,

कुतोऽप्यधिगता वार्त्ता सीताहरणहेतवे ।
बहुरूपास्वरन्त्यत्र रात्रौ रात्रिञ्चरा इति ॥

नागरिका । (८) होदि क्खु एसा हि कुणकुणिआ अन्देउरम्मि विरलविरलं णाम । (सौत्सुक्यम् ।) तदो तदो ।

पुरुषः । अथाहं कथमपि प्रच्छन्नतया दुर्गस्यास्य गुप्तद्वारि भ्रातरं मे शस्त्रपाणिं संरक्ष्य रक्षसां प्रचारपर्यवेक्षणार्थं कपटकोष्ठपालभूमिकापरिग्रहादेवं व्यवसितोऽस्मि नाम ।

(७) नागरिका । ननु कीदृशं खल्वत्याहितम् ।

(८) नागरिका । भवति खल्वेषा हि कर्णोपकर्णिकान्तःपुरे विरलविरलं नाम । ततस्ततः ।

नागरिका। (९) (सहर्षमिव।) धरिणआ हि सा जिस्सा कए देएण एव्वंवसणवइअरे अप्पा णिवाडिओ दाव।

पुरुषः। (सानुरोधम्।) भद्रे! संरूढोऽप्ययमर्थो यथा न पुनः परिस्फुटः स्यात् तथा कर्त्तव्यम्। (दत्ता-मितपूर्वार्धः।) गृह्यताम्। (इत्यङ्गुलीयकमुन्मुच्य ददाति।)

नागरिका। (१०) (पाणिं प्रसार्यादाय च। शिरसि कृता-ञ्जलिः।) जधा आणवेद्र। (स्वगतम्।) घेत्तुं अजुत्तं पि कोदुअस्स गेह्लमि णं। कस्स णाम वोच्छं। जदो क्खु फुट्टणभूइट्ठं वट्टइ दाव पोट्टं मे। (विचिन्त्य।) आं। अज्जाए बुद्दिसेणाए जधादुत्तं आचरक्खिअ एदं उक्केरी-करिस्सं। (इति हर्षं रूपयति।)

(नेपथ्ये।)

(११) अज्जा! परित्ताअध परित्ताअध। एसा णो भट्टि-

(९) नागरिका। धन्या हि सा, यस्याः कृते दैवेन तावदेवंव्यसनव्यतिकरेऽात्मा निपातितस्तावत्।

(१०) नागरिका। (यथाज्ञापयति। गृहीतुमयुक्तमपि कौतुकाय गृह्णाम्येतत्। कस्मै नाम वक्ष्यामि। यतः खलु स्फुटनभूयिष्ठं वर्तते तावदुदरं मे। आम्। आर्यायै बुद्धिषेणायै यथावृत्तमाचय्यैतदुपहारीकरिष्यामि।

(११) आर्याः परित्रायध्वं परित्रायध्वं। एषा नो भर्तृदारिका कृत केनापि कापा-लिकेन बलात्कारेण क्रियते तावत्।

दारिश्रा हन्त केण वि कावालिएण बलामोड़ीम हीरइ दाव ।

( इति रोदनध्वनिः । )

पुरुषः । (कर्णं दत्त्वा । ससंभ्रमम् ।) अये कथमितो रुदितरवसम्भ्रमेदुरं योषितामिवाकन्दितं श्रूयते । (उच्चैः ।) न भेतव्यं न भेतव्यम् । अयमहं भो गच्छामि । (इति गतिभेदेन नादयित्वाश्वं परिक्रम्य सत्वरं प्रस्थितः ।)

( नेपथ्ये । )

आः पाप । कथं खलु,

स्मरस्येव शरं षष्ठं स्त्रीमयं जन्मगोमुखम् ।
पाषण्ड । खण्डयस्येतत् कुसुमं जीवहन्ततः ॥

हंहो रक्षोऽपशद । शिक्षयामि ते ।

नागरिका । (१२ (श्रुत्वा) आपडिओ क्खु विसमो दाव सङ्कड़ो । ( इति माध्वसं नाटयति ।

( पुनर्नेपथ्ये । )

(१३) फो फो सुहिषा । लक्खह लक्खह । मालेति मं एमो हताशो । अले चीअंतवच्छा मे चननी ।

---

(१२) नागरिका । आपतित खलु विषम तावत् सङ्कटम ।

(१३) भा भा सुहृदः । रक्षत रक्षत । मारयति मामेष हताशः । अरे जीववत्सा मे जननी ।

नागरिका। (१४) (श्रवणमभिनीय।) अज्जू! पणालिए! णमो णमो दे। रक्ख मं। (इति वेपमाना कथमपि पथिप्रणाल्यामात्मगोपनं रूपयति।)

(ततः प्रविशन्ति क्षेपणीनिक्षेपणेन द्रोणीं वाहयन्तो भीषणोद्भटवेषाः कपटकापालिकाः।)

प्रथमः। (१५) (कर्णनोदनं नाटयित्वा।) अले एतं च्चेव पुलातु अतिट्ठपुलवं मिथिलेसल्लसिवस्स मन्तिलं। ता खट्टम्मि याव एत्थ सुट्ठुतले ओतलम्ह।

सर्वे। (१६) (बद्धाञ्जलयः।) चअ चअ फकवं मिथिलेसल!। (इति प्रणमन्ति।)

द्वितीयः। (१७) (सर्वतो निरीक्ष्य परीक्ष्य च।) अले पल्लप्पिअ! अतूलातु ईसीसितिमिलं उपवनप्फन्तलं च्चेव निम्मच्छिकं। ता पुनोतत्थ च्चेव छिपम्ह।

तृतीयः। (१८) (समर्थ्योन्मादगद्गदम्।) अले फ-फत्तं।

(१४) नागरिका। मातः! प्रणालिके। नमो नमस्ते। रक्ष माम्।

(१५) प्रथमः। अरे एतदेव पुरतोऽदृष्टपूर्व मिथिलेश्वरशिवस्य मन्दिरम्। तद्घट्टे यावदत्र सुष्ठुतलेऽवतरामः।

(१६) जय जय भगवन्! मिथिलेश्वर!।

(१७) द्वितीयः। अरे पल्लप्रिय! अदूरत ईषदीषत्तिमिरमुपवनाभ्यन्तरमेव निर्मक्षिकम्। तत् पुनस्तत्रैव छिद्यामहे।

(१८) तृतीयः। अरे भ-भद्रम्।

( इति तत्रोपनीय द्रोणीं तीरलग्नां कृत्वा ततोऽवतीर्य तां बध्नाति । )

सर्वे । (१९) हल हल वम् वम् । ( इति कूलारोहणं नाटयन्ति । )

(नेपथ्ये ।)

(२०) जअ जअ भअवं मिहिलेसर ! ।

तृतीयः । (२१) ( कर्णं दत्त्वा । ) अले ले फो-फोनि क्खु इतो म-महंतो हलपोलो ।

प्रथमः । (२२) ससंभ्रमनामम् । अले खलघोस ! अल्लाहि पीठस्स पिव ते कठोलुच्चसत्तेन । ( तूष्णीम्भावावलम्बनमेव श्रेय इति संज्ञया सूचयति । )

द्वितीयः । (२३) ( कियद्दूरं पादाग्रेण गत्वा । ) अले कुतो ताव एत्थ फलहिक्खेत्ते अम्हानं अत्थचंचवी । (सचकितं स्वैरम । ) वेव्वे । कौ नु कवु विलख्खुक्खअम्मि एत्थ लोट्टति नाम ।

(१९) हर हर बम बम् ।
(२०) जय जय भगवन् मिथिलेश्वर ।।
(२१) तृतीयः । अरे रे भ-भगिनि खल्वितो म महान् कलकलः ।
(२२) प्रथमः । अरे खरघोष । अलमिक्षुनिपीडनयन्त्रस्येव ते कठोरोच्चशब्देन ।
(२३) द्वितीयः । अरे कुतस्तावदत्र कार्पासक्षेत्रेऽस्माक ( चञ्चलो ) मोचकाश्चपादताडम् । वैक्ष्वे । (सभयविस्मयं ।) को नु खलु निरक्षरक्षेत्रेऽत्र प्रीते नाम ।

प्रथम-तृतीयौ। (२४) अले ले लुधिलप्पिअ! माफाई। चन्तालोकेन निपुनं निलूपेहि याव। ( इत्युभौ शवके-रुपसर्पतः। )

द्वितीयः। (२५) ( सविषादम् ) हन्ति। हन्ति। केना पि अत्थक्कम्मि निहतो क्खु एसो मधुप्पिओ ताव।

प्रथमः। (२६) ( स्वैरम्। ) अविद्धा। अविद्धा। भो मधुप्पिअ! उट्ठेहि उट्ठेहि। देहि नो सहचलानं पतिवचनं। हा वअस्स! किं चिलस्स सुत्तो सि। कसटं। अज्ज क्खु तुह कते समानीता एसा पच्चुच्छुहनी सुमंठिआ च। हत्ति हत्ति।

अनाथा पानकोट्ठी नो चूअसाला च तुं विना।
उपफाविस्स क्खु को नाम नवं चोलिअकोसलं॥

(२४) प्रथम-तृतीयौ। अरे रे रुधिरप्रिय। ( माभाई। ) मा भैः। चन्द्रालोकेन निपुणं निरूपय यावत्।

(२५) द्वितीयः। हन्दि हन्दि। ( विषादे। ) केनाप्यकाण्डे निहतः खल्वेष मधुप्रियस्तावत्।

(२६) प्रथमः। अविद्धा। अविद्धा। ( खेदे। ) भो मधुप्रिय! उत्तिष्ठोत्तिष्ठ। देहि नः सहचरेभ्यः प्रतिवचनम्। हा वयस्य! किं चिरस्य सुप्तोऽसि। कष्टम्। अद्य खलु तव कृते समानीतैषा नवसुरा शूलप्रोतमांसञ्च। ( हद्धी हद्धी ) हा धिक् हा धिक्।

अनाथा पानगोष्ठी नो ( जूअसाला ) द्यूतशाला च त्वां विना।
उद्भावयिष्यति खलु को नाम नवं चौर्यकौशलम्॥

( सर्वे विषादं नाटयन्ति । )

तृतीयः । (२७) ( सोत्कण्ठमनुच्चैः । ) अले ए-एतस्स सह-कालो म-महा-पसातो पि कत्थ पुणो क-कतो ।

प्रथमः । (२८) ( स्वैरम् ) अले को नु ताव एसो क्खु महप्पसातो नाम ।

तृतीयः । (२९) ( स्वैरम् ।) अले प-पलप्पिअ ! म-म-मठच्छक्खो म-महुपच्छाओ त्ति ठाकिज्जो क्खु ए-एसो ।

द्वितीयः । (३०) ( स्वगतम् । ) अलाहि तस्स पामलस्स नामक्कहनेन । चिना हि पुणो पलङ्कलङ्केन लूपमि-नीत्ति किस्साचि तलुनीए सवसलीलं पि अक्कन्तं ताव । ( प्रकाशम् । ) अले फंफल ! कुमालकुंफकण्णो से फाओ त्ति मत्तिअनाइ मठच्छक्खो ताव एसो । किंतु मोहुपच्छायो त्ति संकतत्थो फोज्झा ।

( ततः प्रविशति वृक्षान्तरालान्निष्क्रम्य महाप्रसादः । )

---

(२७) तृतीयः । अरे ए-एतस्य सहकारी म-महाप्रसादोऽपि कुत्र पुनर्ग-गतः ।

(२८) प्रथमः । अरे को नु तावदेष खलु महाप्रसादो नाम ।

(२९) तृतीयः । अरे प-परप्रिय ! म-म-मठाध्यक्षो म-महोपाध्याय इति ( ठाकिज्जो ) गौरवितः खल्वेषः ।

(३०) द्वितीयः । अलं तस्य पामरस्य नामग्रहणेन । येन हि पुनर्लम्पटरङ्केण रूपवतीति कस्याश्चित् तरुण्याः शवशरीरमप्याक्रान्तं तावत । अरे ( फम्फल ! ) मूर्ख-कुमारकुम्भकर्णोऽस्य ( भार्या ) ज्येष्ठभगिनीपतिरित्यभिजात्येन मठाध्यक्षतावदेषः । किन्तु मोहोपाध्याय इति सङ्केतार्थो ( ओझा । ) भवेत् ।

सर्वे । (३१) ( दृष्ट्वा । सहर्षं स्वैरम् । ) पिअं नो पिअं । अले पसातो क्खु एसो अक्खतसलीलो पि कातलकातलो पिव सनिअं पलोट्टदि । (साग्रहम् ।) पसात ! पसात ! वाहलेहि मधुप्पिओ नु एसो किना ताव वापातितो । तुमए पि कधं वा निव्वाहितो अत्ता त्ति ।

चतुर्थः । (३२) सचकितमितस्ततः प्रेक्ष्य संज्ञया सहचरस्य निधनविवरणं सूचयन्नेव कर्णे दत्त्वा । सभयमनुच्चैः ।) अले अले मधुप्पिअघातको आकतो क्खु खोट्टीए पुत्तो लाचिपुलिसो । उच्चलति ताव आलातो तुलंकम- ह्लिलेसालवो । ( इति पृथुरपथुं रूपयति । )

द्वितीयः । (३३) ( ससम्भ्रमम् । ) तुवलह तुवलह । अले इमातो आसलनं च्चेव मलनं । ( इति सत्वरं द्रोणीमुपेत्य तां चालयन्तो निष्क्रान्ताः सर्वे ।)

ततः प्रविशत्यात्मना द्वितीयो यथोक्तव्यापारः पुरुषः ।)

प्रथमः । ( स्वगतम् । ) कुतो नु खलु नागरिका ।

---

(३१) प्रियं नः प्रियम । अरे प्रसादः खल्वेषोऽक्षतशरीरोऽपि कातरकातर इव शनैः प्रत्यावर्तते । प्रसाद । प्रसाद । व्याहर मधुप्रियो न्वेष केन तावद्व्यापादितः । त्वयापि कथं वा निर्वाहित आत्मेति ।

(३२) चतुर्थः । अरे अरे मधुप्रियघातक आगत खलु दास्याः पुत्रो राजपुरुषः । उच्चरति तावद्दारात् तुरङ्गमक्लेशारवः ।

(३३) द्वितीयः । त्वरध्वं त्वरध्वम् । अरे इतोऽपसरणमेव मरणम् ।

द्वितीयः । ( करतलास्फोटेन वाजिनं सम्भाव्य । समन्ता-
दवलोकयन्नेव सस्पृहमात्मगतम् ।) अहो नु खलु,

तस्याः कोऽपि तनूस्पर्शो हर्षस्पन्दनमावहन् ।
अद्यापि मां जडयति विवर्त इव विद्युतः ॥

( इति समुत्कण्ठां नाटयति । )

प्रथमः । ( परिक्रम्य निपुणमन्विष्य निरूप्य च । ) भद्रे ! अलमावेगेन । इत आगच्छ ।

नागरिका । ३४) सोत्कम्पं कथमपि प्रणालीतः शनकै-र्वहिर्भूय ।) सन्तं पावं । पड़िहअममङ्गलं । (नेपथ्याभि-मुखमवलोक्य । कृताञ्जलिः ससम्भ्रमं प्रथमं प्रति । ) देअ ! इदो दाव किं वुत्तं ।

प्रथमः । ( सानुग्रहम् । श्रूयताम् । तत्र खलु कनीयसी भर्तृदारिका ते नियमचारिणी तावदूर्मिला नाम

आलीजनैरद्य चतुर्दशीति
साधं निशार्धे मिथिलेशमिष्टा ।
मध्येपथं हन्त परापतन्ती
सीतेति साक्रम्यत कौणपेन ॥

नागरिका । (३५) ( समाध्वसम् । ) देअ ! तदो तदो ।

(३४) नागरिका । शान्तं पापम् । प्रतिहतममङ्गलम । देव । इतस्तावत किं वृत्तम् ।

(३५) नागरिका । देव ! ततस्ततः ।

प्रथमः। अथ कुररीणामिव तत्सहचरीणां कातरकण्ठेन समाहूतस्तत्र सन्निपत्य भ्रातासौ मे दुरात्मनस्तस्य पश्चादनुसरन्नेव सद्यः खलु—

व्यनाशयन्महाकायं विद्रुतं द्रुतमेव तम्।
हरिः करिणमाक्रम्य रम्भामिव करेणु ताम्॥

नागरिका। (२६) पडिहदममङ्गलम्। (सोच्छ्वासम्।) जअदु जअदु मिहिलेसरो। दिट्ठिआ क्खु भट्टिदारिआए, जाणे जीअणरक्ख-

णिमित्तमित्थं असुत्थदा तिस्सा।

प्रथमः। (अस्थिरमश्वं स्थिरीकृत्य।) यत् सत्यम्।

अशुभमपि शुभनिमित्तं
जातु विधातुर्भवेत् कृपया॥

नागरिका। (२७) (तथैव साशंसम्।) देअ! मण्णमि दाव मिहिलेसरस्स किवाए अइरा चेअ होहिइ क्खु अरक्खसं तेल्लोक्कं। (सोत्सुक्यम्।) तदो तदो।

(२६) नागरिका। प्रतिहतममङ्गलम्। जयति जयति मिथिलेश्वरः। दिष्ट्या खलु भर्तृदारिकायाः। जाने जीवनरक्षणनिमित्तमित्थमसुस्थता तस्याः।

(२७) नागरिका। देव! मन्ये तावन्मिथिलेश्वरस्य कृपया अचिरादेव भविष्यति खलराक्षसं त्रैलोक्यम्। ततस्ततः।

प्रथमः । समनन्तरञ्चाहमुपसृत्य तत्र शुश्रूषाभिरेनां प्रत्यापन्नचेतनामकरवम् । स्थाने खलु,

तां वेपमानामुपनीय बालां
निरर्गलं दुर्गमदुर्गहर्म्यम् ।
असंस्तुतोऽपि स्वजनैः स्तुतोऽस्या
भ्रातृद्वितीयस्त्वरयागतोऽस्मि ॥

अधुनात्र न खलु ते युक्तमवस्थानम् । ( इत्युभौ शनकैः परिक्रम्य निष्क्रान्तौ । )

नागरिका । (३८) ( सोत्कण्ठम् । ) कुदो णु चुलुचुलइ दाहिणा अच्छी । वेवइ मे हिअअं इमिणा दुण्णिमित्तेण । जधा तधा होउ । ण क्खु हं पुणो वि णिअणिओअसंपाअणस्स गच्छिहिमि । ( विभाव्य । ) ता एत्थ णवरं सुणिदादो खिज्जिआसङ्का । होउ । सा उ भअवदीए मेत्तेईए चलणअन्तं गएत्ति । ( इति सचकितं परितः परिपश्यन्ती सत्वरं निष्क्रान्ता । )

(३८) नागरिका । कुतो नु स्पन्दते दक्षिणमक्षि । वेपते मे हृदयमनेन दुर्निमित्तेन । यथा तथा भवतु । न खल्वहं पुनरपि निजनियोगसम्पादनाय गमिष्यामि । तदत्र केवलं सुनृताया उपालम्भाशङ्का । भवतु । सा तु भगवत्या मैत्रेय्याश्चरणोपान्तं गतेति ।

( ततः प्रविशति मैत्रेयी विषादं रूपयन्ती सूनृता । बहिःप्रकोष्ठमधिष्ठाय प्रपठन्तो वटवश्च । )

मैत्रेयी । ( श्रवणमभिनीय । ) वत्से ! सूनृते ! इतो हि समुल्लसति किल जरठशुककुलकलकलैः सह वटूनामाम्नायपारायणध्वनिः । एहि । तदधुना खल्वाश्रमाभ्यर्णान्तरमम्लपर्णवेदिकायामनुकौशिकीतीरं यावदुपविश्य संकथयावः । ( इति परिक्रम्य तथा करोति । )

सूनृता । (३८) (अनुसृत्य । स्वगतम् ।) एसा पसस्सपुस्सतोआ भअवदी कोसिई । ( इति प्रणम्यादूरतस्तिष्ठति । )

मैत्रेयी । ( सस्नेहम् । ) कल्याणि ! अलमायासेन । अत्रैव तावदुपविश ।

सूनृता । (३९) जधा आणवेदि भअवदी । ( इति सविनयं कथञ्चिद्वेदिकायाः प्रान्तमातिष्ठति । )

( नेपथ्ये । )

भ्रातः ! कण्व ! उत्तिष्ठ । अतिक्रान्ता रजनी ।

प्राचीं निजांशुकहृतां
चुम्बत्यर्कोऽतिरागिणि स्वैरम् ।

(३८) सूनृता । एषा प्रसन्नपुण्यतोया भगवती कौशिकी ।

(३९) सूनृता । यथाज्ञापयति भगवती ।

प्रययौ ह्रियेव भ्रमके-
मीलितताररेक्षणा श्यामा ॥

अपि च ।

बालानूरुवितन्यमानतिमिरव्रातक्षतिः पक्षती-
र्व्याधुन्वद्भिरशोककोकनिकरैरालोक्यमानः क्षणम् ।
विन्दद्भिः कुलवन्दितां पिककुलैः कूजद्भिरेष स्तुतः
प्रोद्यन् पादमदो ददाति दिनकृद्भूमीभृतां मूर्धसु ॥

( मैत्रेयीसूनृते नवोदितमादित्यं प्रणमतः । )

मैत्रेयी । पारिकोशिकि दत्तदृष्टिः । ) अहो खलु यावद-
विरलविशालशालसरलशल्लकीनिकरनिरन्तरस्निग्धनील-
परिसरारण्यपरिकीर्णनिर्झरिणीवारिपूरतारतरारावमु-
खरितकन्दरस्य बालारुणरुचिरुचिरस्य च मयूराद्रेर्वै-
भातिकं रामणीयकम् । तथा हि ।

प्रीत्यैवं नित्यनृत्यप्रवणशिखिगणारब्धबर्हेन्द्रधन्वा
धत्ते नीलाभ्रलीलां कुलिशभृदुपलश्यामलः सानुरुच्चैः ।
अस्मिंस्तापिच्छगुच्छावलिगलितरजोराजिमज्जत्तमिस्रे
विद्युद्वल्लीविलासं कलयति सुतरामोषधीनां प्ररोहः ॥

सूनृता । (४०) ( विलोक्य । ) सच्चअं । पमसग्गम्भीरा क्खु
अरस्साणी ।

(४०) सूनृता । सत्यम । प्रमसगम्भीरा खल्वरण्यानी ।

साणुवेणुवणट्ठाण-घूअघुक्कारमंसलो ।
उच्चं उच्चरइ प्फारो णिज्झरुग्गारणिस्सणो ॥

मैत्रेयी । ( विचिन्त्य । ) अहो प्रमादः । यदाश्रौषम्, वत्सा मे वैदेहो दुर्विषहविरहव्यथनार्दितेति, तत आरभ्य मुहुरेवं प्रभूततरमायासमनुभवामि । न्ययुङ्क्ष्चि च हन्त युञ्जानप्रायां परिव्राजिकामपि तच्चित्तविनोदनाय वत्सां मे बुद्धिपेशाम् ।

सुनृता । (४१) (स्वगतम् । ठाणे क्खु हिअउव्वेओ भअवदीए ।

मैत्रेयी । (सोद्वेगमात्मगतम् । ) न खल्वनपत्यता मामेव-मुपस्नेहयति । अपि नाम वस्तुमाहात्म्यम् । यत् सत्यम्, संसाराद्विरतमपि खल्वविरतमेव हृदयं मे नितरामासक्तमस्याम् । (हृदि करतलमारोप्य ।) हृदय ! कोऽयं ते स्नेहपरिप्लवो विकारः । (प्रकाशम् ।) वत्से ! सूनृते ! सम्प्रति प्रतिविधानवामनैव मामेवं समुत्सु-कीकुरुते । ननु

लवङ्गीप्रमुखाज्ज्ञातभूयिष्ठापि परिस्फुटम् ।
साम्प्रतं श्रोतुमिच्छामि किमारब्धेति सा पुनः ॥

---

सानुवेणुवनस्थान-घूकघूत्कारमांसलः ।
उच्चैरुच्चरति स्फारो निर्झरोद्गारनिस्वनः ॥

(४१) सूनृता । स्थाने खलु हृदयोद्वेगो भगवत्याः ।

सूनृता । (४२) (निःश्वस्य ।) भअवदि ! तदो पहुदि हन्त बलिअं जेव्व परिबाहीअदि सा हदकन्दप्पेण जाणई । अणुदिअहं दाव परिहीअदि अङ्गेहिं । उक्खुडिदबालकमलिणी विअ पडिक्खणं परिकिलम्मदि । पिअसहीए वि णालवेदि । णाभिणन्देदि अ अपुव्वसंकधाउ । सदा क्खु अण्णचित्ता विअ चिट्ठदि । तेण हि एक्कस्स पक्कन्तस्स अण्णविधकहणं त्ति अन्तिअं वि माआणं णोवसप्पेदि । बहुसो माणिदं हि विसअं अम्हेहिं वारं वारं सारमिदं वि ण सुमरेदि । कदुआ वि कअलीघरं पविसिअ मअपत्तपत्त-सअणा क्खु एसा परिअणमेव्वं वावारेदि । जधा ।

ओमल्ल लवङ्गि ! अङ्गं
बीअअ विजए । मणोअपत्तेहिं ।
कमले ! कलअ मुणालिं
सुन्दरि ! चन्दणरसं सिंच ॥

(४२) सूनृता । भगवति । ततःप्रभृति हन्त बलवदेव परिबाध्यते सा हतकन्दर्पेण जानकी । अनुदिवसं तावत् परिहीयतेऽङ्गैः । उन्मूलितबालकमलिनीव प्रतिक्षणं परिक्लाम्यति । प्रियसख्यापि नालपति । नाभिनन्दति चापूर्वसङ्कथाः । सदा खल्वन्यचित्तेव तिष्ठति । तेन ह्येकस्य प्रक्रान्तस्यान्यविधकथनमित्यन्तिकमपि मातृणां नापसर्पति । बहुशोऽनुभूतं हि विषयमस्माभिर्वारं वारं स्मारितमपि न

किं अ। सा तग्गदेण अहिलासेण,

णिमीलिअविलोअणा कुसुमबाणबाणद्दिए
हिए कअकरम्बुआ पिअविणिग्गमं कम्पई।
कधाउ तुह पुच्छए णिहुअ-वाइआ-वेइणी
लवङ्गिमह अस्समा पडिणिवट्टइ साअरं॥

अत्थि क्खु एसा जणस्सुदी, जं कोमुईमईओ देअकुमारीओ रअणीसु अवणीवलअम्मि परिघोलन्ति णाम। एक्कआ णिसामुहे पिअसही वइदेही हिमअरकरफरिसादो वि संतत्था भविअ सेअभरपरिप्पुदा थरथराअमाणपीवरोरुजुअला एव्वं अक्कंदीअ, 'हा हन्त सुणिदे।

स्मरति। कदापि कदलीगृह प्रवि  शतपत्रपत्रशयना खल्वेषा परिजनमेव व्यापारयति। यथा।

अवकन्दय लवङ्गाङ्गि वीजय विजय। सरोजपत्र।
कमल। कलय मृणाली सुन्दरि। चन्दनरस सिञ्च॥

किञ्च। सा तद्गतमभिलाषेण।

निमीलितविलोचना कुसुमबाणबाणार्दिते
हृदि कृतकराम्बुजा प्रियविनिर्गमं कम्पती।
कथालव पृच्छति निभृतवाचिकावेदिनी
लवङ्गीमथाश्रमात् प्रतिनिवर्तमाना सादरम्॥

अस्ति खल्वेषा जनश्रुति, यत् कौमुदीमय्यो देवकुमार्यो रजनीष्ववनीवलयं परिघूर्णन्ते नाम। एकदा निशामुखे प्रियसखी वैदेही हिमकरकरस्पर्शादपि

सुणिदे ! दुरन्तकिअन्तदूदीणं एदाणं अग्गिमअह्नत्था-
हिंतो मं रक्ख रक्ख' त्ति । इत्थं गदे सा हि पच्चहं
णाम । ( संस्कृतेन । )

दाहोद्वेगपलायितैरिव बहिः शून्या समस्तेन्द्रियै-
रन्तश्चित्तनिवासिनं प्रियतमं द्रष्टुं प्रविष्टेव ।
निष्पन्दालिखितेव सा कथमपि प्राप्तप्रबोधा पुनः
प्रत्यङ्गं भवति प्ररूढ़पुलका प्रेक्ष्य प्रतिच्छन्दकम् ॥

अण्णं अ उण विम्हअजणअमेव्वं । जं क्खु
सरसविआरं पत्ता
सरसा पि खणं प्पडीअफंसेण ।
तावमिई व मुणाली
वंजइ तीआ-तणुत्तावं ॥

सन्त्रस्ता भूत्वा स्वेदभरपरिप्लुता थरथरायमाणपीवरोरुयुगल्यैवमाक्रन्दीत । हा हन्त
सुनृते । सुनृते । दुरन्तकृतान्तदूतीनामेतासामग्निमयहस्तेभ्यो मां रक्ष रक्षेति ।
इत्थं गते सा हि प्रत्यहं नाम ।

अन्यच्च पुनर्विस्मयजनकमेवम् । यत खलु
स्वरसविकारं प्राप्ता सरसापि क्षणं प्रतीकस्पर्शेन ।
तापमितिरिव मृणाली व्यनक्ति तस्यास्तनुतापम् * ॥

---

* ( अत्र "थार्मोमिटार्" नामकयन्त्रविशेषः स्मर्तव्यः । अतनुतापस्य । )

अध वा किं वर्ण्णीअदि संपदं से तवस्सिणीए संदावसन्ताणो दाव । तधा हि ।

जोह्ला उण्हा परं ताए चन्दणं खोड़कारणं ।
तुसारो पि खदक्खारो णाली बाणावली विश्र ॥
णं एदएण वि से संदावो ण णिक्कमदि । (इति दैन्यं रूपयति ।)

मैत्रेयी । वत्से ! किमात्थ, सुधास्यन्दिनी चन्द्रिकापि सन्तापजननी, चन्दननिष्यन्दोऽपि स्फोटजनक इति । (निःश्वस्य ।) कष्टं भोः कष्टम् । अपि नाम,

माल्यं मृणालवलयं
कुङ्कुमहिमचन्द्रचन्दनं यस्य ।
सन्धुक्षणानि स कथं
मदनाग्निस्तैः प्रशम्येत ॥

कल्याणि ! अग्रतो यावत् कथय ।

सूनृता । (४२) माए ! किं वा उण अग्गदो । अणुवेलं परि-

---

अथवा कि वर्ण्यते साम्प्रतमस्यास्तपस्विन्या सन्तापसन्तानस्तावत् । तथाहि ।

ज्योत्स्नोष्णा परं तस्याश्चन्दनं स्फोटकारणम् ।
तुषारोऽपि क्षतक्षारो नाली बाणावलीव ॥

नन्वियतापि तस्याः सन्तापो न निष्क्राम्यति ॥

(४२) सूनृता । मातः ! किंवा पुनरग्रतः । अनुवेलं परिमलि-चम्पकमुकुलनिर्मथ-

मलिद-चम्पअ-मउल-णिम्महण-बहल-परिमलुव्वहण-मंसलेण दलिद-बउलवुन्द-मअरन्द-बिन्दु-सन्दोहं समुव्वहन्तेण दक्खिणमारुदेण वि कामं अदक्खिणेण सा क्खु अदिविअ दाव उत्तामीअदि। विसूरीअदि अ विकुएण उण कुडिल-कुन्तल-णिज्जिदरूवदाए कुविदेहिं विअ महुअरेहिं। वाउलीकरीअदि णाम णिआमं पञ्चमकोलाहलेण अलद्ध-समग्ग-सर-सोहग्गदाए ईस्सालूहिं विअ कलकण्ठकुलेहिं। अन्तरन्तरा क्खु एसा सविसेस दूसहा-आम-विअम्भमाणुद्दाम सन्दाव-दूमिआ णिअन्तिअ आलोअ-मग्गं जामिणि त्ति दिणे पि अच्छादिअ पडन्तेण कुड्ड-लिहिदं दिणणाहं। अव्वो,

होस्सइ से वि विओओ
विओअविहुरा अहं दाणिं।

---

मदबहलपरिमलोद्वहनमांसलेन दलितबकुलवृन्दमकरन्दबिन्दुसन्दोहं समुद्वहता दक्षिणमारुतेनापि काममदक्षिणेन सा खल्वतीव तावदुत्ताम्यते। खेद्यते च विकृतेन पुनः कुटिलकुन्तलनिर्जितरूपतया कुपितैरिव मधुकरैः। व्याकुलीक्रियते नाम नितरां पञ्चमकोलाहलेनालब्धसमग्रस्वरसौभाग्यतयेर्ष्यालुभिरिव कलकण्ठकुलैः। अन्तरान्तरा खल्वेषा सविशेषदुःसहायामविजृम्भमाणोद्दामसन्तापदूना नियन्त्र्यालोकमार्गं यामिनीति दिनेऽप्याच्छाद्य पटान्तेन कुड्यलिखितं दिननाथम्। अव्वो। (दुःखे।)

इअ किदअ-कोअ-मिहुणं
णिअडेइ मुणालतन्तुणा झत्ति ॥

एक्कसि एसा उण पओससमअम्मि ईसीसिचन्दिमालोअ-विच्छुरिदं सुद्धन्तलग्गं अणुप्पवण्णा केसरुज्जाणं एक्कलिआ तत्थ पाडिएक्कं कुडंगेसु कंपि मग्गन्ती पुच्छन्ती अ तस्स वुत्तन्तं वल्लिदुमा अदेक्खिअ तं देक्खिअ उण सरसीए लहुलहुलहरीसु पडिबिम्बं उडुवइणो कन्दलिदपुलअङ्कुरा, 'अम्मो अअं मे हिअअवल्लहो' त्ति झंपदाणस्स पसारिदबाहुजुअला, 'अइ अलं साहसेण' त्ति वाहरन्तेन अलक्खिदं पुट्ठदो उवसप्पिअ देअसेणा विअ कुमारेण कुमारअरामचन्देण संधारिदा आसि ।

मैत्रेयी । (मोच्छामम् ।) शान्तं पापम् । तादृशस्य खल्वनुरागस्य समुचितोऽयं व्यापारः । ततस्ततः ।

---

भविष्यत्यस्यापि वियोगो वियोगविधुराहमिदानीम् ।
इति कृतककोकमिथुनं निगडयति मृणालतन्तुना झटिति ॥

एकदैषा पुनः प्रदोषसमये ईषदीषच्चन्द्रिकालोकविच्छुरितं शुद्धान्तलग्नमनुप्रपन्ना केशरोद्यानमेकाकिनी तत्र प्रत्येकं निकुञ्जेषु कमपि मृगयन्ती पृच्छन्ती च तस्य वृत्तान्तं वल्लिद्रुमानदृष्ट्वा तं दृष्ट्वा पुनः सरस्या लघुलघुलहरीषु प्रतिबिम्बमुडुपतेः कन्दलितपुलकाङ्कुरा, 'अम्मो अयं मे हृदयवल्लभ' इति झम्पदानाय प्रसारितबाहुयुगला 'अयि अलं साहसेनेति व्याहरतालक्षितं पृष्ठत उपसृप्य देवसेनेव कुमारेण कुमाररामचन्द्रेण सन्धारितासीत् ।

सूनृता । (४४) तत्थ अणुपदं जेव्व उवट्ठिदाए विणदाए तदा पआससङ्काए सो क्खु महाभाओ अन्तरहिदो संवुत्तो । अध तेण तेण ववसिदेण अहिअं हिरीणा विअ पिअसही णो ओणदमुही सअं जेव्व सअणभअणं पच्चाअदा दाव । कधं वा जाव आअक्खेमि । तधा हि ।

संकप्पिअ सिविणे सा
जह जह भुअबन्धणं दढं कुणइ ।
तह तह बाहक्खम्भा
आलिअणे होन्ति सूसासा ।

अवि अ । क्खामक्खामावअवं
णिआमकामेसुसोसणा एव्वं ।
परिहरइ केलिहारिणी
हित्था विअ तं अपुव्व त्ति ॥

(४४) सूनृता । तत्रानुपदमेवोपस्थितायां विनतायां तदा प्रकाशाशङ्कया स खलु महाभागोऽन्तर्हितः संवृत्तः । अथ तेन तेन व्यवसितेनाधिकं ह्रीणेव प्रियसखी नोऽवनतमुखी स्वयमेव शयनभवनं प्रत्यागता तावत् । कथं वा यावदाचक्षे । तथाहि ।

सङ्कल्प्य स्वप्ने सा यथा यथा भुजबन्धनं दृढं करोति ।
तथा तथा बाष्पस्तम्भा आलिङ्गने भवन्ति सोच्छ्वासाः ॥

अपिच । क्षामक्षामावयवा निकामकामेषुशोषणादेवम् ।
परिहरति केलिहारिणी ह्रीव तामपूर्वेति ॥

एक्कं दाव अच्छेरं, जधा जधा दुब्बलङ्गी तधा तधा लाअस्सं अहिअदरं होदि। एव्वंछाआ-मेत्त-सेसङ्ग-लट्ठी अदिकिसदाए ससङ्कलेहा विअ दुदीआ सिद-केदअ-णिहेहिं सपुलअ-कवोल-फलएहिं आपण्डुरं मिलाअमाणपङ्कअं विअ आणणं समुव्वहन्ती पप्फुरन्ताहरपल्लवा अदिसोअणिज्जदंसणा संवुत्ता। किं अ।

> दूरगअपरिणआसा
>
> परिहरिआहरणकीलणाहारा।
>
> सिढ़िलेइ जीअबन्धं
>
> ण हु उण पेम्मं पि सा जाउ॥

मैत्रेयी। सत्यम्।

> प्रेमेव सारं खलु जीवितस्य
>
> विनाकृतं तेन तमिस्रमेतत्।

---

एकं तावदाश्चर्य्यं, यथा यथा दुर्ब्बलाङ्गी तथा तथा लावण्यमधिकतरं भवति। एवंछायामात्रशेषाङ्गयष्टिरतिकृशतया शशाङ्कलेखेव द्वितीया सितकेतकनिभाभ्यां सपुलककपोलफलकाभ्यामापाण्डुरं म्लायमानपङ्कजमिवाननं समुद्वहन्ती प्रस्फुरदधरपल्लवातिशोचनीयदर्शना संवृत्ता। किञ्च।

> दूरगतपरिणयाशा परिहृताभरणक्रीड़नाहारा।
>
> शिथिलयति जीवबन्धं न खलु पुनः प्रेमापि सा जातु॥

नाभाति चेतः प्रणयेन हीनं
नीरं यथा नीरजमन्तरेण ॥

(साग्रहम् ।) सूनृते । अपि सा चाद्य विनोदयति खल्वात्मानं महानुभावस्य तस्य कथया नाम ।

सूनृता । (४५) (दीर्घं निःश्वस्य ।) भअवदी क्खु एव्वंवादिणित्ति अदो वरं वि वाहिप्पदि । अहह, अदिभूमिं गदो जेव्व से अणुराओ । सा हि दाणिं केअलं किसलाअन्त-कन्त-हत्थ-पलहत्थ-गण्डमण्डला, अहोवअ तादस्स वि दुत्तरो पणो त्ति णिरन्तरुव्वन्त-णअण जल-पक्वालिद-मुद्ध-मुहारविन्दा उण्णिद्दा गमेदि विसाअदीहदरा रअणीउ दाव । हिओ किल एव्वं सुण्णहिअआ जाणई णिसीधसमअम्मि कुञ्चिआए जन्तवादाअणं उग्घाडिअ देअदादुदीआ दुग्गुववणं पविसन्ती हन्त दइव्वादो पवुद्धाए मए क्खु अणुवत्तीअमाणा आसि । अध सा तहिं परिदो परिब्भमन्ती कंपि पुण्णाअतरुवरं उवगम्मा

(४५) सूनृता । भगवती खल्वेवंवादिनीत्यतः परमपि व्याक्रियते । अहहातिभूमिं गत एव तस्या अनुरागः । सा हीदानीं केवलं किसलायमानकान्तहस्तपर्यस्तगण्डमण्डला हीवत तातस्यापि दुस्तर पण इति निरन्तरोद्गलन्नयनजलप्रक्षालितमुग्धमुखारविन्दा विनिद्रा गमयति विषाददीर्घतरा रजनीस्तावत । ह्यः किल एवंशून्यहृदया जानकी निशीथसमये कुञ्चिकया यन्त्रवातायनमुद्घाट्य दैवताद्वितीया दुर्गोपवन

'अम्महे दिट्ठिआ पड़िवालेदि मं हिअएसरो' त्ति तं दाव सहरिसं परिस्सइअ बद्धाञ्जली, 'जीविदणाह ! अहुणा अविवेअन्धं विसज्जिअ बन्धुजणं तुज्झ चलणं जेव्व सरणं कुणमि'त्ति आमन्तअन्ती असदो दिसादिट्ठी, 'चिट्ठ क्खणं आअच्छेमि' एव्वं विस्सविअ सणिअं अग्गदो गदुअ च, हा ताद! बालसहआर! पवसेदि अज्ज दे जणणी। मा विसुमरेहि मं। हा वच्छ! रत्तासोअ! तुए मरिसिदव्वो मे कण्णउर पल्लव-भङ्गावराहो। हा वच्छले! लवङ्गलदिए! साहाबाहाहिं गाढ़ं आलिङ्गेहि मं। अदो वरं दुल्लहा होमि। इअ सिणेहादो विअ पत्तेअं सम्भाविदुं पउत्ता क्खु एसा दक्खिणदो पेक्खमाणा, 'णाह! णाह! पेक्ख कंण वि णिक्किवेण भम्मा

प्रतिपालयन्तो हन्त दयात प्रबुद्धया मया खल्वनुव्रज्यमानासीत। अथ सा तव परितः परिभ्रमन्ती कमपि पुन्नागतरुवरमुपसन्ना 'अम्महे दिष्ट्या प्रतिपालयति मां हृदयेश्वर' इति तं तावत् सहर्षं परिष्वज्य बद्धाञ्जलि, 'जीवितनाथ! अधुना अविवेकान्धं विसृज्य बन्धुजनं तव चरणमेव शरणं करोमीत्यामन्त्रयमाणान्यत दत्तदृष्टि, तिष्ठ क्षणमागच्छाम्येवं विश्राव्य शनैरग्रतो गत्वा च, हा तात! बालसहकार! प्रवसत्यद्य ते जननी, मा विस्मर माम्। हा वत्स! रक्ताशोक! त्वया मर्षयितव्यो मे कर्णपूरपल्लवभङ्गापराधः। हा वत्सले! लवङ्गलतिके! शाखाबाहुभिर्गाढमालिङ्ग माम्। अतःपरं दुर्लभा भवामि। इति स्नेहादिव प्रत्येकं

क्खु इमं कणअचम्पअसाहा’ । इत्थं कलुणकण्ठं वाहरन्ती बाहं विहरन्ती अ हन्त अणुसरन्तीए मए सासङ्कमङ्कं आरोविअ दुग्गब्भन्तरं आणीदा दाव । संपदं एत्तिओ क्खु मे अहिलासो । अवि णाम तस्स जणस्स मिरिमुहपुण्डरीअं उण वि एक्कवारं पेक्खिअ दुव्वारसोअभाअणं अप्पाणं वावादइस्सं त्ति ।

मैत्रेयी । हन्त ममाप्येतादृशी खल्वाशङ्का हृदयस्य । तदधुना जीवितादुद्विजमानया दुष्करमपि शक्यमनया किञ्चिदनुष्ठातुमिति । (चिन्तामभिनीय ।) अहो ।

सर्वथाकुण्ठदोर्दण्डचण्डिमोत्सेकशालिनः ।
कुसुमेषोर्भगवतः प्रतापस्तावदीदृशः ॥

सूनृते ! क्व नु पुनरिदानीं वैदेही ।

सूनृता । (४६) अम्म ! अहुणा क्खु एमा पबोज्झमाणा मज्जाए

सम्भावयितुं प्रवृत्ता खल्वेषा दृश्यमानं प्रेक्षमाणा, ‘नाथ ! नाथ । पश्य केनापि निष्कृपेण भग्ना खल्वियं कनकचम्पकशाखा’ । इत्थं करुणकण्ठं व्याहरन्ती बाष्पं विहरन्ती च हन्तानुसरन्त्या मया साशङ्कमङ्कमारोप्य दुर्गाभ्यन्तरमानीता तावत् । साम्प्रतमेतावान् खल्वस्या अभिलाषः । अपि नाम तस्य जनस्य श्रीमुखपुण्डरीकं पुनरप्येकवारं दृष्ट्वा दुर्वारशोकभाजनमात्मानं व्यापादयिष्यामीति ।

(४६) सूनृता । अम्ब ! अधुना खलु सा प्रबोध्यमानायैव बुद्धिवैषम्या दुर्गमध्ये वर्तते

बुद्धिमेणाए दुग्गमज्झम्मि वट्टदि णाम। अहं उण पिअ-सहिं तारिसिं दट्ठुं हन्त अचअन्ती जुगुच्छन्ती अ चिरजीविदादो कद्दआ वा दुक्खविमोक्खो भविस्सदि त्ति पुच्छिदुं पड्डिवस्स म्हि दे पाअमूलं। (इति पादयो-र्निपत्य व्याकुला रोदिति।)

मैत्रेयी। (स्वगतम्।) हन्त सीतानुरागिणीयं तपस्विनी। (करग्रहणेनोत्थाप्य। सस्नेहं प्रकाशम्।) वत्से! समाश्वसिहि समाश्वसिहि अलमात्मानं खेदयित्वा। दैवमस्मभ्यं स्वस्ति करिष्यति। श्रूयते हि प्रायो रामचन्द्रस्यापि खल्वेतादृशी प्रतिपत्तिः। नितान्तमुत्कण्ठमानस्यापि सीतायाः सा त्वस्य निरतिशयगम्भीरतया सहसा नानुभूयते। स खलु

असंलक्ष्यविकारोऽपि महासत्त्वतया बहिः।
अन्तर्बिभर्ति सन्तापं सरस्वानिव वाड़वम्॥

(साकूतम्।) नूनं निर्व्यूढोऽयमस्यामस्याभिनिवेशः। तत् खलु फलोन्मुखमेव नः समीहितम्।

नाम। अहं पुनः प्रियसखीं तादृशीं द्रष्टुं हन्ताशक्नुवती जुगुप्समाना च चिरजीवितात् कदा वा दुःखविमोक्षो भविष्यतीति प्रष्टुं प्रतिपन्नास्मि ते पादमूलम्।

सूनृता। (४७) (आश्वस्य। स्वगतम्।) एदेण अमिअआसा-रसोअलेण वअणेण पच्चुज्जीविद म्हि। (प्रकाशम्।) भअवदि! दुब्बोहं क्खु लोओत्तराणं चरित्तं झत्ति ण विअसेदि।

मैत्रेयी। (सानन्दम्। तदद्य धन्यः खलु विधातुरनन्यसामान्यरूपगुणमयनिर्माणप्रयत्नः, यदनुकूलतया सम्पाद्यते तेन रत्नयोरनयोः सदृशः सम्भेद इति।

सूनृता। (४८) सप्रश्रयम्।) अम्ब! जाणामि ण क्खु कीरिसो दाव रअणाणं संभेओ त्ति। ता दाणिं उवदिसदु।

मैत्रेयी। वत्से! शृणु, कथयामि। इह खलु रत्नानि तावत् स्थावराणि जङ्गमानि चेति द्विविधानि परिलक्ष्यन्ते। तत्र खल्वाद्यानि तानि समुत्पद्यन्ते रत्नाकराकरगिरिवरेभ्यो नाम। अथ प्रेक्षावन्तो यान्येव प्रयत्नतः समभिलषन्ति शिरःकण्ठहृदयेषु धारयितुं, तादृशानान्तु परेषां जङ्गमानामतिदुर्लभः समुद्भवः। अपि नामैषा मनागारूढशाणचक्राणां खल्वस्पृष्टसूचीमुखानाञ्च समुत्

(४७) सूनृता। एतेनामृतासारशीतलेन वचनेन प्रत्युज्जीवितास्मि। भगवति! दुर्बोधं खलु लोकोत्तराणां चरित्रं झटिति न विकसति।

(४८) सूनृता। अम्ब! न जानामि न खलु कीदृशस्तावद्रत्नयोः सम्भेद इति। तदिदानीमुपदिशतु।

पत्तिश्चेत्र पवित्रतरः कुक्षिरेव सौभाग्यवतीनामिति साक्षात् प्रतीयते । प्रतीयन्ते च तेषां लोकोत्तरप्रतिभानां पुरस्तान्निर्माल्या इव नीलमणयो, नीरागा इव पद्मरागा, निष्फलानीव मुक्ताफलानि । किं बहुना ।

मणिकारः प्रवीणोऽपि मान्द्यात्स्वादुपचक्षुषः ।
तेषां न प्रभवत्येष तारतम्यविनिश्चये ।

किञ्च । मह्यापत्प्रकार एव तेषां परीक्षानिकषः एतानि पुनः स्त्रीपुरुषभेदाभ्यां रत्नानि जङ्गमान्यपि द्विविधान्येव । तत्राभिधीयते खल्वभियुक्तैर्वंस्त्रीरत्नपुरुषरत्नयोरन्योन्यसदृशव्यतिकररूपसम्भेदयोर्मिथुनं समाख्यया दम्पतीति ।

सूनृता । ४९) ( अञ्जलिं बद्ध्वा । सविनयम् । ) अज्ज क्खु मए भअवदीए पमादादो जेव्व अहिगओ रअणविवेओ दाव ।

मत्रेयी । ( सूनृताया मुखमालक्ष्य । सस्नेहम । वत्से दुःखाकरोति यत् सर्वाल्पह ग्रहप्रातिकूल्यादतुल्यान्यपि रत्नानि प्रायेण जन्मभूमावेव यावत् प्रकाशमानानि नोद्दिष्टानि केनापि महात्मना वयमिति खेदादिव स्वयमेव विशीर्णानि भवन्तीति तथा हि ।

(४९) सूनृता । अद्य खलु मया भगवत्याः प्रमादादेवाधिगतो रत्नविवेकस्तावत् ।

अधिजलनिधिगर्भं रत्नराजिर्निकामं
स्फुरति रुचिरकान्तिर्ध्वान्तधारान्तरेऽपि ।
विकसति मरुवातैः शोषणाय प्रसूनं
सुरभि निरभियुक्तप्रेक्षणान्ते वनान्ते ॥

सूनृता । ५० सच्चं भअवदि ' सच्चं । ( इति निःश्वस्य । बाष्पबिन्दुमेकमलक्षितं पातयति । )

( नेपथ्ये ।

यस्योत्सङ्गविटङ्के
शाङ्के पङ्केरुहेक्षणा गौरी ।
राजति कापि कपोती
सपोतमेतं नमस्यामः ॥

मैत्रेयी । (कर्णं दत्त्वा सत्वरमुत्थाय च । वत्स ! साधु साधु । त्वया खलु सम्यगनुबोधितास्मि । सूनृतां प्रति ।) वत्से । इदानीमपि हर्षविषादयोर्व्यतिकरमनुभवामि । तदधुना साधयाम्यहं पाणिग्रहणनिशायां जनकदुहितुर्दैवमस्या· प्रतिकूलं शमयितुं गौरीशङ्करसपर्यानिर्वाहाय । अपि नाम वत्सा मे मैथिली खल्वविलम्बं यथा मखमण्डपं परिमण्डयेदिति त्वमप्यज्ञाय प्रतिष्ठस्व ।

(५०) सूनृता । सत्य भगवति । सत्यम् ।

सूनृता । (५१) जधा आणत्ती भअवदीए ।

( इत्युभे मत्वरं निष्क्रान्ते । )

इति पूर्वरागवर्णनो नाम तृतीयोऽङ्कः ।

---

# चतुर्थोऽङ्कः ।

ततः प्रविशति सूनृतांसार्पितबाहुवल्ली पर्याकुला सीता । )

सीता । ( १ ) ।दृष्टिक्षेपमभिनीय ।। हला हिरिआमि । ण क्खु सुक्खदरा तिरक्खिणी तिरंकादुमरिहदि । आहि-णहन्ति मह्मसक्ष्वं तादपरिअणाओ दाव ।

सूनृता । ( २ ) सहि ! एत्थ का उण लज्जा कस्मआश्रणस्स । णवर आआरो त्ति अलिन्दमोलिदो विलम्बिदा एसा ।

सीता । ३ ) ।स्मितं विधाय । ऊ । उम्मीलन्ति विअणाओ ।

। इति लोचने निमील्य तत्रैवोपविशति । )

---

(५१) सूनृता । यथाज्ञप्तिर्भगवत्या ।

( इति तृतीयोऽङ्कः । )

(१) सीता । हला जिह्रेमि । न खलु सूक्ष्मतरा तिरस्करिणी तिरस्कर्तुमर्हति । आहिण्डन्ते मत्स्वरूपं तातपरिजनास्तावत् ।

(२) सूनृता । सखि ! अत्र का पुनर्लज्जा कन्याजनस्य । केवलमाचार इत्यलिन्द-मौलितो विलम्बितैषा ।

(३) सीता । ऊ । उन्मीलन्ति वेदनाः ।

सूनृता। (४) (तस्याः स्मितहेतुमुन्नीय क्रीडयेवोपविश्य। करकिसलयेनाङ्गान्यमुष्याः परामृशन्ती।) सन्तं पावं। (सदृष्टिक्षेपम्।) पिअसहि! जस्स किदे आअदा सि, सो दाणिमअं तुज्झ पुरदो जेव्व पविसेदि।

(ततः प्रविशतो जनकशतानन्दौ विश्वामित्ररामलक्ष्मणाः परिजनाश्च समुचिताः।)

जनकः। इतस्तावदासनानि। (इत्युपविशन्ति सर्वे।)

सूनृता। (५) (सिचयाञ्चलेन तस्या नेत्रे परिशोध्य। ता एदं समग्गसोहग्गलच्छीपरिग्गहेक्काअदणं मणोरहपिअदमस्स सिरिमुहपुण्डरीअं बाहसलिलन्तरेसु पेक्खमाणा विरह पज्जाउलं हिअअं अप्पणो विणोदेहि णं

सीता। (६) (चक्षुषी कथञ्चिदुन्मील्य। सदैन्यम्।)

बाह! पसीद जेणाहं खणमेत्तं वि दुल्लहं।
जणं पेक्खिअ अक्खीणं संभावेमि महूसवं॥

(विलोक्य।) हला किं इन्दआलमिदं। (विचिन्त्य।)

(४) सूनृता। शान्तं पापम्। प्रियसखि! यस्य कृते आगतासि स इदानीमेव ते पुरत एव प्रविशति।

(५) सूनृता। तदेतत् समग्रसौभाग्यलक्ष्मीपरिग्रहैकायतनं मनोरथप्रियतमस्य श्रीमुखपुण्डरीकं बाष्पसलिलान्तरेषु प्रेक्षमाणा विरहपर्याकुलं हृदयमात्मनो विनोदयेदम्।

(६) सीता। बाष्प! प्रसीद येनाहं क्षणमात्रमपि दुर्लभम्।
जनं दृष्ट्वा नः सम्भावयामि महोत्सवम्॥

महि ! जं एसो क्खु महाणुभाओ वाआमेत्तएण वि मए ण संभाविदो । ता णूणं अअं दाव अहं अकिदपड़िवत्ती अदक्खिण त्ति संभावेदि । (सविमर्शम् ।) णं एसो वि किं सिणिद्धे जणे इमस्सिं साणुक्कोसो भवे । (सकातर्यम् ।) हिअएसर ! अदिणिग्घिणा जाणई अणुअम्पिणा तुए किं पुणो वि पेक्खिदव्वा । (इति सास्रं वीक्षते )

रामः । (सहसा सीतामवलोक्य । स्वगतम्) अहो नु खलु ।

एषा नीलांशुकमय-
नवीनजवनीकृतान्तरा प्रायः ।
क्षीणच्छोणाभ्रवृतां
हिमकरलेखामधः कुरुते ॥

सूनृता । (७) (समाश्वास्य ।) सहि ! मा होदु तुह क्खु सन्देहो । एसो वि आदंसणादो पहुदि मणोहववेअणं

सखी ! कियन्तं कालं नीतं । सखि । यदेष खलु महानुभावो वाङ्मात्रेणापि मया न सम्भावितः । तन्नूनमयं तावदहमकृतप्रतिपत्तिरदक्षिणेति सम्भावयति । नन्वेषोऽपि किं स्निग्धे जनेऽस्मिन् सानुक्रोशो भवेत् । हृदयेश्वर ! अतिनिर्घृणा जानकी अनुकम्पिना त्वया किं पुनरपि द्रष्टव्या ।

(७) सूनृता । सखि । मा भवतु तव खलु सन्देहः । एषोऽप्यादर्शनात् प्रभृति मनोभववेदनामसहमान उज्झितसकलव्यापारः प्रतिच्छन्दकेन त आत्मानं विनोदयतीति

असहमाणो उज्झिदसअलवावारो पडिच्छन्दएण दे अप्पाणं विणोदेदि त्ति णज्जइ मए पउत्ती । णं कधं ण पेक्खसि अवत्थं कुमारअस्स । तधा हि । (संस्कृतेन ।)

अङ्गं नीलाम्बुजस्निग्धं यांऽददान्नयनोत्सवम् ।
विशीर्णकरणः पाण्डुः कृच्छ्रादुन्नेय एव सः ॥

तधा वि दुग्गमो क्खु अअं गाढाणुराअविवत्तो

सीता । (८) पेक्खामि सहि । पेक्खामि । (सस्पृहं निरूपयन्ती ।) हन्त सच्चअं पहाद मिअङ्कमण्डलावण्डुणा आआरेण परिक्खासो एसा क्खु गम्भीराणुभवमेत्तेण सो एव्व त्ति पच्चभिआणिज्जइ । ( विचिन्त्य दीर्घं निःश्वस्य च । सास्रमात्मगतम् ।) अइ देअ ' लोअणाणन्द । एवं किलिट्ठो सि । ( प्रकाशम् । ) हला ।

अहुणा णज्जइ सम्मं
ण हु सोमारं सुहाअरं पेम्मं ।

---

ज्ञायते मया प्रवृत्तिः । ननु कथं न पश्यस्यवस्थां कुमारस्य । तथा हि । तथापि दुर्गमः खल्वयं गाढानुरागविवर्तः

(८) सीता । पश्यामि सखि । पश्यामि । हन्त सत्यं प्रभातमृगाङ्कमण्डलापाण्डुनाकारेण परिक्षाम एष खलु गम्भीरानुभवमात्रेण स एवेति प्रत्यभिज्ञायते । अयि देव लोचनानन्द । एवं क्लिष्टोऽसि । हला ।

अधुना ज्ञायते सम्यक् न खलु सुकुमारं सुखाकरं प्रेम ।

अवि उ अरुन्तुअमेअं
अदिकढ़िणं णीरमं किंपि ॥

(साक्षेपम्) ताद ! ताद ! हन्त पड़िण्णाए रक्खणं तुज्झ गरीअं णहु पुणो भीदाए दाव । हा ताद ! अज्ज णिव्वुढ़ो तं अवच्चसिणेहो । सहि ! अहिअं पीड़ेदि मं सीसविअणा । ण सक्कणोमि सिढ़िलीभूदमूलबन्धणं हिअअं ओत्थाविदुं । (इति तस्या अङ्के शयनं नाटयति ।)

राम: । (दूरात् कथञ्चिदाकर्ण्य । स्वगतम्) अहो नु खलु । मत्यमीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

सूनृता । (१) सन्तं पावं । सहि । वइदेहि । किदं गरुअअणस्स ओहीरणाए । किंणु दाव अणभिण्णा सि राएसिणो पड़िण्णावुत्तन्तस्स । जं दाणिं उच्छलिदबाहुप्पीड़ं रुवसि णाम ।

अपि त्वरुन्तुदमेवमतिकठिनं नीरसं किमपि ।

तात । तात । हन्त प्रतिज्ञाया रक्षणं खलु ते गरीयः, न खलु पुनः भीताया स्तावत् । हा तात । अद्य निर्व्यूढस्तेऽपत्यस्नेहः । सखि । अधिकं पीडयति मां शीर्षवेदना । न शक्नोमि शिथिलीभूतमूलबन्धनं हृदयमवस्थापयितुम् ।

(१) सूनृता । शान्तं पापम् । सखि । वैदेहि । कृतं गुरुजनस्यावधीरणया । किन्नु तावदनभिज्ञासि राजर्षेः प्रतिज्ञावृत्तान्तस्य । यदिदानीमुच्छलितबाष्पोत्पीडं रोदिषि नाम ।

सीता । (१०) हला । मा मेवं । सव्वं दाव जाणामि । ण क्खु अहं कृवालाअलुद्धा पडिणी । तआणिं सिविणअम्मि एवमाइट्ठं आसि । वच्छे ! सीदे ! जह क्खु एसा तिलोअसुन्दरी तह तिहुवणेक्कवीरो महापुरिसो त्ति ।

सूनृता । (११) ता कीस उण एण्हिं अदिमेत्तं वाउलीभूदा सि ।

सीता । (१२) हद्धी हद्धी । दाणिं गरुअजणस्स वि तुण्डे तरङ्गिणी क्खु वाणी, जं अअगवं दाव सुरासुराण वि असक्कारोअं त्ति । ( इति वैक्लव्यं रूपयति ।)

सूनृता । (१३) पटान्तेन पुनः सीतायाश्चक्षुषी विशोधयन्ती । स्वगतम् । अच्छेरं दाव साहदि मे पहाद-वाटेरिद-फुल्लेन्दीवरपडिमं कण्णमूलफंसलोलुवं विअ लोअणदुगं । (प्रकाशम् । सहि समस्सस । ण क्खु ईरिसो

(१०) सीता । हला न सत्यम् । न [illegible] ।मि । न खल्वहं कृपाणीकृतलुब्धा पाणी । तदानीं स्वप्न एवमादिष्टमासीत् । [illegible] ।म । अद्रीश यथा खल्वेष विलोकसुन्दरस्तथा त्रिभुवनैकवीरो महापुरुष इति ।

(११) सूनृता । तत् कस्मात् पुनरिदानीमतिमात्रं व्याकुलीभूतासि ।

(१२) सीता । हा धिक् । हा धिक् । इदानीं गुरुजनस्यापि तुण्डे तरङ्गिणी खलु वाणी । यज्जगत्तातेन सुरासुराणामप्यसंहार्यमिति ।

(१३) सूनृता । आत्मगतं नानाश्चर्यमेतस्याः प्रभातवातेरितफुल्लेन्दीवरप्रतिमं कर्णमूलस्पर्शलोलुपमिव लोचनयुग्मम् । सखि । समाश्वसिहि न खल्वीदृशो विधातुः देवाजनदुर्लभरूप । शनिसाणाथामा मृषा भविष्यति ।

विहादरस्स देई-भग-दुल्लह-रूव-गामि-णिम्माणग्गामो मुधा भविस्सदि ।

जनकः । (चिन्तां रूपयित्वा ।) भगवन् ! विश्वामित्र !

अत्यूर्जिततपस्तेजो-धाम्नि प्रकुपिते त्वयि ।
त्रिशङ्कोः कारणात् त्रस्ता त्रिलोकीयं स्म कम्पते ॥

अपि च ।

प्रत्यग्रप्रतिपन्नदैन्यविगलत्तेजःसुराधीश्वर-
प्रारब्धप्रणतिस्तुतिस्तव नवं लोकं सिसृक्षोः क्रुधा ।
मान्योऽह वयसा प्रसीद विरम व्यापारतोऽस्मादतो
जल्पन् कम्पभृता करेण चिबुकं पस्पर्श पद्मोद्भवः ॥

नन्वीदृशोऽपि खल्वत्रभवान् प्रेम्णा परवानिव मे यदनुवर्त्तति, तेन साम्प्रतं कुतश्चिदकृतार्थोऽपि सर्वतः प्रायः कृतार्थोऽस्मि संवृत्तः ।

विश्वामित्रः । सखे ! वसुधावल्लभ !

एतेषु सर्वविषयेषु विरक्तचेता
योगीश्वरोऽपि स खलु त्वयि याज्ञवल्क्यः ।
स्नेहं करोति सुतरां जनक ! त्वमेवं
बध्नासि लोकहृदयं किमुतात्र चित्रम् ॥

किञ्च । रत्नगर्भापतिः सत्यं त्वमेवान्ये तु पालकाः ।
यत्प्रसादादसौ सीतां कन्यारत्नमजीजनत् ॥

लक्ष्मणः । (स्वगतम् ।) अये आशंसनीयपुण्यानुभावः सोऽयं ब्रह्मवादी पुराणराजर्षिर्जनकः । ( निपुणं विलोक्य । ) आश्चर्यम् । यदत्रभवान् वार्द्धक्यतुषारसङ्गादपि न खलु जाड्यमासादयति ।

जनकः । शिव शिव । ( इत्युद्वेगं नाटयति । )

विश्वामित्रः । ( निरूप्य । स्वगतम् । ) अस्य हि तावत्,

नेत्रे यद्यपि सद्य एव विनयावष्टब्धबाष्पस्रवे
पक्ष्माग्रेषु तथापि रुद्धतटिनीपूरोपमा वेणयः ।
सत्त्वोत्कर्षबलादविप्लुततया यद्यप्युपेतं वपुः
शंसत्येव तथापि शून्यविषया दृष्टिर्व्यथा मानसीः ॥

प्रकाशम् । सखे ! सीरध्वज ! जानामि खल्वकृतार्थताबीजम् । कृतकृत्यता ते यत्नेन मे नदूरवर्तिनीति जानीहि ।

जनकः । ( सविनयम् । ) एवं नाम यथाह भगवान् । ( वैमनस्यमभिनीय । स्वगतम् । ) कष्टं पुनरेतत्, धनुरारोपणपणपरिणेया मे वत्सेति ।

शतानन्दः । स्वगतम् । ) अपि नाम राममुद्दिश्यायं प्रसङ्गः । भवतु । पृच्छामि । ( विश्वामित्रं प्रति । प्रकाशम् । ) भगवन् ! कस्य खल्विदं क्षीरनीरनिधेरिव सुधानिधिपारिजातौ कुमारयुगलम् ।

विश्वामित्रः । वत्साङ्गिरस ! दाशरथी रामलक्ष्मणौ ।

शतानन्दः । श्रुतपूर्वं ह्येतदस्माकं यत् खलु कौशलाराजेन ऋष्यशृङ्गप्रयोगान्निरतिशयशौर्योदारं दारकचतुष्टयं लब्ध-मिति । अप्यनयोः कतरो रामः ।

विश्वामित्रः । (स्वगतम् ।) निसर्गधीरोऽपि खल्वायुष्मान् विक्लव इव संलक्ष्यते । (निर्दिश्य । प्रकाशम्) शतानन्द !

रामो राजीवनेत्रोऽसौ नीलोत्पलदलद्युतिः ।
पश्य पौलस्त्यदर्पस्य निकषस्ताडकान्तकः ॥

शतानन्दः । किमयमपरो महापुरुषलक्षणो लक्ष्मणो नाम ।

विश्वामित्रः । अथकिम् ।

जनकः । (रामलक्ष्मणौ सस्नेहं निरूप्य ।)

चण्डांशोः कुलमण्डने दशरथे सौराज्यमातन्वति
ख्यातात्यूर्जिततेजसि त्रिभुवनं यस्मिन्निदं शासति ।
पौलोमीहृदि चित्रपत्ररचनाव्यग्रेण रात्रिन्दिवं
जिष्णोः कण्टकिना करेण कुलिशप्रक्षेपणं विस्मृतम् ॥

चिरन्तनप्रियसुहृदस्तस्य कुमारावित्यपर्याप्तबहुमानस्य ।

विश्वामित्रः । (विहस्य ।) किं पुनः प्रचण्डचण्डीशकोदण्डा-रोपणपणपूरणप्रावीण्येन ।

जनकः । (निःश्वस्य ।) क नु पुनरीदृग्भागधेयमस्माकम् । (रामं निर्वर्ण्य । स्वगतम् ।) अहो ऊर्जस्विनोऽपि विश्वस-

नीयतास्य देहस्य । अयञ्च विप्लवमानमात्मानं सुख-
मन्तानो मे विस्रम्भयति । (अपवार्य ।) भगवन्नाङ्गिरस !

यत्राङ्गके सम्पततीह दृष्टि-
स्तत्रैव मज्जत्यपरत्र नैति ।
द्रष्टुं न शक्नोमि समस्तमङ्गं
रामस्य माधुर्यनिधेः किमेतत् ॥

अथैनं लोचनचकोरानन्दनचन्द्रं पश्यतो मे वैवश्यादेव हृदयस्य जायते प्रतिज्ञाभङ्गेऽपि नाम समीहा ।

शतानन्दः । (स्वगतम् ।) न हि स्नेहो युक्तायुक्तमपेक्षते । (सक्षोभमिव । प्रकाशम् ।) राजर्षे । वैदेह । भवानेवमाचष्टे ।

विदेहवंशप्रभवे सदेहमुक्तिभाजने ।
त्वयि त्यक्तप्रतिज्ञे कः प्रतिज्ञां पालयिष्यति ॥

विश्वामित्रः । वत्साङ्गिरस ! यजमानेन ते बहुमानेनापि पणस्य भङ्गोऽपि कर्तुं शक्यते नाम ।

(शतानन्दो जनकस्य मुखमीक्षते ।

जनकः । (सव्रीडमिव ।) ब्रवीमि पुनरेवं, यत् खल्विदं कुण्ठीकृतदशकण्ठं शितिकण्ठकार्मुकं किमप्यद्भुतमिति ।

विश्वामित्रः । (सस्मितम् ।) अयञ्च शशिधरप्रतिमोऽपि खल्व-प्रतिमशक्तिः कोऽप्यद्भुतः कुमारः । तदुपदर्शय दाशरथिमिदं दानवबधूवैधव्यदीक्षादक्षमिन्दुशेखरं धनुः ।

नन्विह हि रामभद्रात् तावदन्येषाम् ।

नूनं शशे विषाणेच्छा व्योम्नि वा चित्रकल्पना ।

बिभित्सा पुरभिच्चण्ड-कोदण्डस्यास्य या किल ॥

जनकः । ( स्वगतम् । ) अनेन पुनः शक्यते न वेत्यहं परिप्लवमानहृदयः सम्प्रमुग्धोऽस्मि ।

(नेपथ्ये । अर्धप्रविष्टः ।)

पुरुषः । (प्रणम्य । कृताञ्जलिः ।) जयति देवः । प्रगल्भो नाम पौलस्त्यपुरोहितः प्राप्तः । स किल राजकार्याद्द्रष्टुमिच्छति ।

जनकः । (स्वगतम् । शिव शिव ।

आः किं करोमि हन्तैषा महत्यापदुपस्थिता ।

श्रूयते क्वचिदन्धाधा वात्या नित्यं प्रवर्तते ।

(प्रकाशम् ।) आगच्छतु । (पुरुषो निष्क्रान्तः ।)

रामः । ( जनान्तिकम् । वत्स ! लक्ष्मण ! अपीदानीं सर्वमेव खलु समीहितं विलम्बितफलमिव लक्ष्यते ।

लक्ष्मणः । तथैव । ) आर्य ! अनुपपन्नमीदृगद्रिभिदा नातिभिन्ने भवति ।

(प्रविश्य ।

प्रगल्भः । (समन्तादवलोक्य । स्वगतम् ।) अये प्रथममेव तावदनीप्सितप्रेक्षणम् । यदिह प्रेक्ष्यमाणप्रचण्डाद्भुताकृतिप्रतीयमानप्रभुत्वपराक्रमोत्कर्षं प्रतिदिनप्रचीयमान-

प्रतापं राक्षसराजवक्षोऽरुन्तुदविलक्षणमनुजभावं प्रभावविभावितगम्भीरमहिमानं तमेतं कौशिकानुयोज्यं रामवृत्तकमाकर्णयतः स्थाने खलु समजनि महामन्त्रिणो माल्यवतो निशासु निद्राच्छेदः। (विश्वामित्रस्थानादुत्थायोपसृत्य च विदेहराजम्। प्रकाशम्।) अपि कुशलं मिथिलावल्लभस्य।

जनकः। इहास्यताम्। स्वागतम्। ननु,

सावधानं दत्तदृष्टी निदिष्टौ यस्य शासनात्।
छत्रचामरयोः कार्यं कुर्वाते चन्द्रमारुतौ॥

अप्यनामयस्तस्य ते राज्ञो रावणस्य।

प्रगल्भः। (उपविश्य। साहङ्कारम्।) राजर्षे! सीरध्वज!

क्रुद्धेऽस्मिन् दशकन्धरेऽतिनिभृतं भ्रूभङ्गभीमाकृतौ
नर्मक्रीडनकर्मणि प्रणयिने कस्मैचिदाकस्मिकम्।
सूत्रामा चकितः क्षणं मुकुलयत्यक्षीणि शीर्णच्छवि-
र्मूर्छत्याधुवति ज्वलत्यपि पुनः सूतेन सार्धं रविः॥

अपि च। आज्ञाप्रतीक्ष्येषु ममभ्रमेषु
बाष्पप्रसक्ताक्षिदलेषु तस्य।
कटाक्षपातस्त्रिदशेषु येषु
तेष्वद्य देवत्वकृताभिमानः॥

तदेवंविधातिप्रौढप्रतापभरावनतसकलसुरासुरस्य विश्रे-

षतो रात्रिन्दिवं वेत्रदण्डधारिदण्डधरदौवारिकस्य प्रतिकूलमपि विधिं बलात् खल्वनुकूलतां नयतो लङ्केश्वरस्य नगरेऽपि नामामयप्रवेशः। (स्वगतम्।) कष्टं पुनरस्य मौरवंशप्रभूताप्राकृतक्षत्रियशिशोः सकाशात् सञ्जातसुन्दासुरेन्द्रपुत्रकलत्रनिधनादारभ्य खल्वेतादृशापशकुनप्रादुर्भाव इति। (चिन्तां नाटयित्वा।) भवतु। यथाशक्ति प्रतिविधातव्यम्। (प्रकाशम्।) आस्तां खल्वियं वार्त्ता यद्भवानीपतिभक्तिभासुरः शरणागतोत्तमोऽयं नक्तञ्चरचक्रवर्तीति। अस्य हि पुरा पुरारिपरिचर्यावसरे,

सन्तुष्टे त्रिविलोचने त्रिजगतीसाम्राज्यदानोद्यते
यैः पूर्वाननुभूतदैन्यवचनैस्तूष्णीं तदानीं स्थितम्।
वैदेहीं विहितां विवाहविधिना वैदेह! देहीति ते
सन्दिष्टं दशकन्धरेण दशभिस्तैरेव वक्त्रैः पुनः॥

मन्ये तावत् कोऽप्येष ते प्रकृष्टपुण्यपरिपाकोपादानो महिमातिशयो वा चतुर्दशलोकलक्ष्मीसापत्न्यजनको नाम जानक्याः कोऽपि प्राक्तनपुण्यपरीपाको वा (स्वगतम्।) किं वास्मत्प्रभोरेव मतिविपर्यय इति।

सीता। (१४) (आकर्ण्य।) हद्धी। हद्धी। सहि! सुकिदे!

(१४) सीता। हा धिक्। हा धिक्। सखि सुकृते! निशाचरोऽपि मे कामयते पाणिग्रहणम्। हला तदा किं प्रतिपत्स्यते।

णिसाअरो वि मे कामेदि पाणिग्गहणं। (सोत्कण्ठम्।) हला। तदो किं पड़िवज्जिस्सदि।

सूनृता। (१५) (समाश्वास्य। सहि! अलं आवेएण। एत्थ क्खु राएसिणो पड़िसा जेव्व अन्तराओ।

सीता। (१६) (कृताञ्जलिरूर्द्ध पश्यन्ती।) अज्जे बुद्धिसेणे। ता कहं मे मन्दभग्गाए किदे तुमं वि अलिअवअणा संवुत्ता। (इति नेत्रे निमीलयति।)

(अपटीक्षेपेण प्रविश्य)

बुद्धिषेणा। (सीतायाः पार्श्वत उपविश्य। करतलेन तस्याः सस्नेहमङ्गानि स्पृशन्ती।) वत्से! जानकि! कथं वा खल्वहमलीकवचना भवेयम्। (तस्याः प्रोन्मिषितनेत्रा याश्चिबुकं स्पृष्ट्वा। अयि मुग्धे!

नेत्री मैत्रेयशाखाया योगसिद्धिमुपेयुषी।
योगीश्वरीदमाह स्म भर्ता ते राघवो ध्रुवम्॥

(इति समाश्वास्याङ्गुलीयकं प्रदाय च।) वत्से! कल्याणसम्पत्तिनिमित्तं तव नियोजितास्मि भगवत्या सौभाग्यदेवताराधनाय। (इति सप्रमादं सूनृतायां दत्तदृष्टिः सत्वरं तथैव प्रस्थिता।)

---

(१५) सूनृता। सखि। अलमावेगेन। अत्र खलु राजर्षेः प्रतिज्ञैवान्तरायः।

(१६) सीता। आर्ये बुद्धिषेणे। तत् कथं मे मन्दभाग्यायाः कृते त्वमप्यलीकवचना संवृत्ता।

सीता। (१७ (तदादाय नामाक्षराणि वाचयित्वा च। सहर्षपुलकम्।) एदं पुणो अज्जाए केण उग्घादिण अहिगदं। विचुम्ब्य। सोच्छ्वासम्।) सहि! अच्छरीअं किंपि पेक्ख। (इति सख्या हस्ते ददाति।)

सूनृता। (१८) (सकौतुकं निरूप्य।) सहि! विस्सत्था होहि। लद्धं दाव आलम्बणं हिअअस्स। णं अङ्गुलीअअं जेव्व णिअंसणं अवस्संभाविणो विआहस्स। (इति सीताया अङ्गुलौ तदामोचयति।)

जनकः। शिव शिव। (इति चिन्तां नाटयति।)

विश्वामित्रः। वयस्य! वैदेह! कामारिकार्मुकाकर्षणकण्डूलदोर्मण्डल इवालक्ष्यते वत्सो रामभद्रः।

लक्ष्मणः। (अपवार्य।) आर्य! आर्य! करोतु तावच्चन्द्रकलाकिरीटकोदण्डाकर्षणयशोधवलां त्रिलोकीम्।

रामः। (किञ्चित्स्मित्वा।) वत्स! यावदाज्ञाप्रतीक्ष्योऽस्मि गुरुपादानाम्। कुतः।

प्रीतिर्गुरूणां सततं विधेया
कायेन वाचा मनसाप्यवश्यम्।

(१७) सीता। एतत् पुनरार्यया केनोद्घाटितेनाधिगतम्। सखि! आश्चर्यं किमपि पश्य।

(१८) सूनृता। सखि! विश्वस्ता भव। लब्धं तावदवलम्बनं हृदयस्य। नन्वङ्गुरीयकमेव निदर्शनमवश्यम्भाविनो विवाहस्य।

अथेदृशेऽर्थे खलु चापलेन
प्रगल्भमानः स्वयमेति गर्हाम् ॥

प्रगल्भः । (रामं निर्गुणं निध्याय । स्वगतम् ।) अहो कीदृगस्य गाम्भीर्यं कीदृगिदं धीरोदात्तमधिष्ठानञ्च । भवतु । द्रष्टव्यमेतस्य महावीरप्रकाण्डस्य भुजाशाण्डीर्यम् । (प्रकाशम् ।) भो मीरध्वज ! कियच्चिरं चिन्तयते । तत् किमिदमस्माकं तावदरण्यरोदनं नाम वचनं, यत् प्रतिवचनमपि न प्रतिपद्यते । (अलिन्दं लक्ष्यीकृत्य । सगवम् ।) हा तपस्विनि ! जनकि ! जानामि । अपि नाम खल्वेतदरण्यरोदनं त्वमेव परिगंस्यति ।

विश्वामित्रः । (शान्तस्मितमात्मगतम् ।)

कुलाहलात् काकलाद्वा नानेनालभ्येत मैथिली ।
श्रीकण्ठकण्ठभूषाय कौस्तुभस्य हि निर्मितिः ॥

लक्ष्मणः । (स्वगतम् ।) आः पाप ! एवं प्रजल्पतस्ते कथं शतधा न दीर्यते जिह्वा ।

जनकः । (स्वगतम् ।) अहह वज्रेण ताडितोऽस्मि ।

सीता (१९) (आकर्ण्य ।) हा णाह ! हा दइद ! कुदो सि । (इति मूर्च्छति ।)

(१९) सीता । हा नाथ ! हा दयित । कुतोऽसि ।

सूनृता । (२०) ( सविषादम् । ) पमादो पमादो । अव्वो । तिव्वसं‌ओ वाआवदूगा । (कक्षान्तराभिमुखमवलोक्य ।) उदअं उदअं । (इति निजोरूपरि सीतायाः शिर आरोप्य । पटान्तेन बीजयति । )

( अपटीक्षेपेण प्रविश्य । )

ऊर्मिला । (२१) ( उदकमुपनीय । स्वगतम् । ) हन्त देण देण विमलमोत्तामरपविवत्तसोम्मेण फंसेण अवहिद-हिअअ म्हि जादा । ( अपाङ्गेन सावहित्थं लक्ष्मणं नम्रमुखी पश्यन्ती । ) ण हु णीहारन्तरिदस्स पुण्णिमाचन्दस्स पेक्खणं चओरिं सन्तप्पेदि । ( इति प्रस्खलितचरणार्पणं तथैव प्रस्थिता । )

सूनृता । (२२) हद्धी हद्धी । सरीरसंसअं आरोविदा किदन्तेण वइदेही । एदेण दारुणेण सहीए दसापरिणामेण आकंपिदं मे हिअअं ॥ ( मुखं नयने च वारिणाभिषिच्य । ) हा हा दाणिं खुहिदबाहुप्पीड़णिवभरा पबुद्धा विअ लक्खीअदि । ( सास्रम् । ) सहि । समस्सस समस्सस ।

(२०) सूनृता । प्रमादः प्रमाद । अव्वो । तीव्रसंवेगो वाग्वज्र । उदकमुदकम ।

(२१) ऊर्मिला । हन्त तेन तेन विमलमुक्तामरपविवसौम्येन स्पर्शेनापहृतहृदयास्मि जाता । न खलु नीहारान्तरितस्य पूर्णिमाचन्द्रस्य दर्शनं चकोरीं सन्तर्पयति ।

(२२) सूनृता । हा धिक हा धिक । शरीरसंशयमारोपिता कृतान्तेन वैदेही । एतेन

सीता । (२३) (उत्स्वप्नायमाना दरोन्मीलिताक्षी हृदि करतलमाधाय । हा हद म्हि मन्दभाइणी । हा जीविदणाह! हा जाणईमणोरहसव्वस्स। कहिं सि। परित्ताहि परित्ताहि इमदो मं दुट्ठसप्पादो। अज्ज क्खु अअं णिसंसो वच्छम्मि आरुहिअ दट्ठुं ववस्सदि। हन्त अज्ज पड़िट्ठिदो दुट्ठदेव्वस्स दारुणसमारम्भसरिसो परिणामो। (इत्यमाक्रन्दन्तीषदुत्कम्पम्।) अहुणा कहिं गदो मे हिअअवल्लहो। चिन्तामभिनीय। अज्ज कुदो णु मइ तं असाहारणो दाव सणेहो। (सदैन्यम्) हन्त कहं अज्ज वि मं दुव्विणोदेण परिहूअमाणं णोवसप्पेसि। हा पिअ। पअ-प्पविस-ववसाआदा वि मं रक्खिअ कुदो क्खु दाणिं एवं णिक्कलुणो विअ परिच्चअसि मं। हा हन्त अज्ज कं वा असरणा सरणं पड़िवज्जामि। ता पसीद। णं तुरिअमेव्व आअदुअ जीविदं

दारुणेन सख्या दशापरिणामेनाकम्पितं मे हृदयम्। हा हृदाणी चुभितवाष्पात्पीडनिर्भरा प्रबुध्य लज्जते। सखि समाश्वसिहि समाश्वसिहि।

(२३) सीता। हा हतास्मि मन्दभागिनी। हा जीवितनाथ। हा जानकीमनोरथसर्वस्व। क्वासि। परित्रायस्व परित्रायस्वास्मान्मा दुष्टसर्पात्। अद्य खल्वयं नृशंसो वक्षस्याक्रम्य दष्टुं व्यवस्यति। हन्ताद्य प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः। अधुना क्व गतो मे हृदयवल्लभः। अद्य कुतो नु मयि त असाधारणस्तावत् स्नेहः। हन्त कथमद्यापि मां दुर्विनीतेन परिभूयमानां नोपसर्पसि।

मे अवलम्बसु । कुदो णु अज्ज वि कूरो ण णिवट्टदि । (चण तूष्णीम्भूय ।) ण क्खु वच्छलेण अज्जेण अब्भुववम्म म्हि । (किञ्चिदुन्नीतशीर्षा चक्षुषी प्रोन्मील्य सर्वतो विलोक्य च ।) कहं अच्छिण्णगम्भेव्व हारिदं मसन्ती खिस्म म्हि । (सखीं प्रति ।) हला किं णु कखु अअं सिविणअविलासो ।

(श्रुत्वा प्रगल्भवर्जमन्ये सोद्वेगमलिन्दं विलोकयन्ति ।

मूनृता । २४ सहर्षं स्वगतम् ।)

छोमाणहे सही मोहं पत्ता वि पइदिं गआ ।

खणम्म कलुसा होइ तड़ापाएण सम्भई ॥

(समाश्वास्य । प्रकाशम् ।) सहि ! तधा जधा भणसि ।

गम: । (सावहित्थमात्मगतम् ।) अहह, अतिगम्भीरोऽयं दुःसहशोकसंवेग: । नन्वमुष्या:,

हा प्रिय । पथ प्रवशव्यवसायादपि मत्त्वा कृत खल्विदानीमेव निष्करुण इव परित्यजसि माम । हा हन्त इदानी क वा अशरणा शरणं प्रतिपद्ये । तत प्रसीद । ननु त्वरितमनागम्य जीवित मऽवलम्बस्व । कुतो न्वद्यापि क्रूरो न निवर्तते । न खलु वत्सलेनार्येणाभ्युपपन्नास्मि । कथमच्छिन्नगर्भेण हारित मन्यमाना खिन्नास्मि । हला किम् खल्वयं स्वप्नविलास ।

(२४) मूनृता । छोमाणहे सखी मोह प्राप्तापि प्रकृति गता ।

क्षणस्य कलषा भवति तटापातेन स्वर्णदी ॥

सखि । तथा, यथा भणसि ।

हन्तालिन्दमुपेताया मद्दृष्टिदर्शनोत्सुका ।
व्यवस्यतीव संहर्तुं जवनीं जवतोऽधुना ॥

(सपदि जवनिकास्खलनं सूचयित्वा निर्वर्ण्य ।) हन्तेदानीम्,

अनैर्मोहतमस्विनयां विगतायां विभात्यसौ ।
उष:श्रीरिव लोकानां नयनानन्ददायिनी ॥

अनिद्रया नित्यमलं कृशाङ्ग्या
मालिन्यलेखां कलयत्यपाङ्गः ।
क्षारोष्णवारिस्रवणादजस्रं
गण्डस्थली पाण्डुरतां बिभर्ति ॥

प्रगल्भः । सनैष्ठुर्यम् ।) अयि मैथिलि !

तदलं कातरोल्लापविलापैर्बहुलैस्तव ।
हरिण्याः करुणाक्रन्दात् पारीन्द्रस्तां न मुञ्चति ॥

( जनकं प्रति । मावज्ञम् भो वैदेह ! किं पुनरेतदेवास्मासु वः प्रतिवचनम् ।

जनकः । (सविषादमात्मगतम् ।) कष्टम्, अनार्योऽपि खल्वार्यब्रुवोऽयं सूचीव्यधैर्मां व्यथयति ।

शतानन्दः । (स्वगतम् ।) अत्यापन्नः खलु विदेहराजः । अति हि नाम प्रगल्भतेऽसौ प्रगल्भः । ( प्रकाशम् । )

तथा न तापयत्येव नैदाघस्तपनः स्वयम् ।
रजःप्रकर एवासौ यथा तत्करसंक्रमात् ॥

(धैर्यमवष्टभ्य। ससंक्षोभम्।) वत्स! रामभद्र! शीघ्रं प्रतिपद्यस्व माहेश्वरमारोप्य महेष्वासं प्रतिवचनमेतस्मै।

विश्वामित्रः। (आज्ञाप्रतीक्ष्यं रामं दृष्ट्वा।) वत्स! रामभद्र! यथाविधि विधीयतामाङ्गिरसेनादिष्टम्।

रामः। (ससम्भ्रमम्।) यदाज्ञापयन्ति भगवच्चरणाः। (इति दरविवर्तितग्रीवमपाङ्गेनालिन्दमभिलक्ष्य लक्ष्मणेन सह सोत्साहगाम्भीर्यकौतुकं परिक्रम्य च निष्क्रान्तः।)

प्रगल्भः। (स्वगतम्।) अहो नु खलु धृष्टता मनुष्यकूटानाम्। कथं पुनरमी शृङ्खलितप्रायत्रिदशग्रीवं दशग्रीवमपि न गणयन्ति।

सीता। (२५) (उपविश्य। सौत्कण्ठिकम्।) सहि! सुणिदे! संपदं पुणो कहं। (इत्यर्धोक्ते रोदिति।)

सूनृता। (२६) (आश्वास्य।) अइ उज्जुए! कीस उण विसज्जिदधीरत्तणमेव्वं पमुक्ककण्ठं रुवसि। तत्थभोदी जोईसरघरसुआसिणी भअवदी मेत्तेई जेव्व अम्हो सरणं।

सीता। (२७) (किञ्चिदाश्वस्य।) सहि! सुणिदे! तुह सणेहो

(२५) सीता। सखि। सूनृते। सम्प्रति पुनः कथम्।

(२६) सूनृता। अयि ऋजुके। कस्मात् पुनर्विसृष्टधैर्यमेवंप्रमुक्तकण्ठं रोदिषि। तत्रभवती योगीश्वरगृहमधिवासिनी भगवती मैत्रेय्येवास्माकं शरणम्।

(२७) सीता। सखि। सूनृते। तव खलु हृदयं त्वमेव पश्यसि। अहं पुनः परिप्लवमाना

क्खु, एवं पेक्खदि। अहं पुणो परिप्पवमाणहिअआ अज्ज वि ण पत्तेमि दाव। (कर्णं दत्त्वा।) हला किं दाव एसो भरिदभुअणो विउलविउलो कोलाहलो। (दृष्ट्वा।) कहं वा अकण्डपज्जलितमहोक्कालेलिहाणज्जालाजटालं विअ अन्तरिक्खं झत्ति संवुत्तं।

(नेपथ्ये।)

दीव्यद्दोर्दण्डदर्पं ममसमयधृतोत्थापितावर्जिताग्रे
प्रोतज्याकृष्टभग्नत्रिपुररिपुधनुःप्रौढटङ्कारनादः।
ब्रह्माण्डाघातजातद्विगुणितगरिमा त्र्यम्बकोद्गीतसाम-
स्तोत्रोच्चैःस्वानपीनः श्रयति न किमहो शान्तिमद्यापि लोके॥

आर्येण कोदण्डस्य खण्डमेकं खण्डपरशोर्दिशि परित्यक्तमपि।

सूनृता। (२८) (आकर्ण्य निवर्ण्य च।) जअ जअ भअवं मिहिलेसर! (उत्थाय। सीतामालिङ्ग्य। सहर्षम्।) पिअसहि! दिट्ठिआ वड्ढामो। एहि, संभावेहि दाव कुमारअं वरणमालिआए। (इति तां हर्षविह्वलां हस्ते गृहीत्वापटीक्षेपेण निष्क्रान्ता।)

कृतार्थाद्यापि न प्रत्येमि तावत। हला किं तावदेष भरितभुवनो विपुलविपुलः कोलाहलः। कथं वाकाण्डप्रज्वलितमहोल्कालेलिहानज्वालाजटालमिवान्तरिक्षं झटिति संवृत्तम्।

(२८) सूनृता। जय जय भगवन्! मिथिलेश्वर॥ प्रियसखि! दिष्ट्या वर्धावहे, एहि। सम्भावय कुमारं वरणमालिकया।

प्रगल्भः । ( क्षणं स्तम्भित इव स्थित्वा । साद्भुतमात्मगतम् । ) अये कथं दिवि देवदुन्दुभिध्वनिः पुष्पवृष्टिरप्सरसां नृत्यारभटी च । ( निःश्वस्य । ) अहो नु दुरात्मनः क्षत्रियडिम्भस्य सर्वङ्कषो विक्रमः । दृष्टः खल्वद्य दिवौकसां स्वयं वन्दित्वमुपेयुषामिकायनीभावः । ( सवितर्कम् । ) हन्त किं नामैतत् खल्वतन्त्रमन्त्रं सर्वेन्द्रियमोहनमिन्द्रजालम् । ( इति विषादं नाटयति । )

जनकः । ( उत्थाय । सविनयानन्दम् । ) भगवन् ! महाद्भुतनिधे ! विश्वामित्र !

ते सत्पुरुषा विरला
ये खलु कलयन्त्यनीरिताः कृत्यम् ।
स्तोकास्तेऽपि विटपिनो
येऽज्ञातसुमाः फलं दद्युः ॥

ननु प्रदत्ता खल्वसौ वैदेही तावद्धूर्जटिधनुषैव रामभद्राय । दीयते मया पुनर्लक्ष्मणायोर्मिला । ( इति प्रणमति । )

विश्वामित्रः । ( उत्थाय । परिष्वज्य । सपरितोषम् । ) सुष्ठु सदृशमनुगृहीतं रघुकुलम । (सस्मितम् ।) किञ्चिदाख्येयं तावदनाख्यातमस्ति ।

जनकः । आज्ञापयतु ।

विश्वामित्रः । दत्ता रामाय सीतासौ लक्ष्मणाय तथोर्मिला ।

माण्डवीं श्रुतकीर्तिञ्च कनिष्ठाभ्यामिहार्थये ॥

जनकः । ( सोदार्यम् । ) एतत् पुनरस्मद्वक्तव्यमुक्तं भगवता ।

शतानन्दः । ( सदृष्टिक्षेपम् । भगवन् विश्वामित्र ! दृश्यता-
मयमद्य भग्नभार्गवगुरुभर्गशरासनो वरणमालिकया
सविशेषविराजमानमूर्तिर्मूर्तिमानिव सङ्गोज्ज्वलो वीर-
रसः समुपैति ।

( ततः प्रविशति यथानिर्दिष्टो रामो लक्ष्मणश्च । कुश-
ध्वजपुरस्कृताः सीतोर्मिलामाण्डवीश्रुतकीर्तय । सोऽपि ।
रामलक्ष्मणौ दुहितरश्च विश्वामित्रादीन् प्रणमतः । )

विश्वामित्रः । ( निर्वर्ण्य । सहर्षम् ।

सस्वेदबिन्दुवदनेन्दुरुदञ्चितभ्रू-
विभ्रश्यमानतिलकः स्खलदुत्तरीयः ।
कान्ताकटाक्षमधुपाकलिताम्बुजाङ्घ्रि-
रामः सदा जयति जीवतु जीवनं मे ॥

जनकः । ( दृष्ट्वा । आनन्दविह्वलमिव । ) एष हि

नील-नीरजनि-मञ्जुलोचनो
लोकलोचनचकोरचन्द्रमाः ॥
चित्तचौर्यचणचूर्णकुन्तल-
स्तारकस्त्रिजगतोऽपि जीवतु ॥

कुशध्वजः । ( निपुणं निरूप्य । ) आश्चर्यमाश्चर्यम् ।

सान्द्रानन्दप्रदे रामे वीरैकरसविग्रहे ।
लावण्यं मधुरत्वञ्च वर्त्तते समभावतः ॥

विश्वामित्रः । ( पृष्ठतः करतलमारोप्य । ) वत्स ! शतानन्द ! सदानन्दहृदयं परिगतार्थं कृत्वा खल्वागमयस्व तावत् सपरिजनं महाराजदशरथम् ।

जनकः । ( सशिरःकम्पम् । ) एवमस्तु ।

शतानन्दः । गृहीतः सन्देशः । ( इति प्रगल्भवर्जं निष्क्रान्ताः सर्वे । )

प्रगल्भः । ( सखेदम् । हा कष्टम् । कथं पुनर्दशमुखस्यापि साम्मुख्यसम्पादने वैमुख्यमवालम्बत वराकी मे भ्रातृ-दुहिता । ( दीर्घं निःश्वस्य । ) हन्त हन्त कुतोऽद्य नु तावच्चिरस्य खलु प्रचितो मे राज्याधिगमाशा-व्यतिकरः । (विभाव्य । तथापि यथामति यतितव्यम् । ( सविद्युत्प्रकाशं मेघनिर्घोषं सूचयित्वा समन्तादूर्ध्व-मवलोक्य च । ) अये कोदण्डदण्डभङ्गारवेणाहत इव खल्वसौ

तमस्तोमच्छन्नं सपदि विदधद्दिङ्मुखचयं
तडिज्ज्वालालीढः सघनरसितं वर्षति घनः ।
धनुर्भङ्गावेगक्षुभितहृदयोच्छ्वासभरतः
सनिर्घोषं सास्रं स्फुटमिव रुषा रोदिति विभुः ॥

(नेपथ्ये ।)

भो भोः पौरजानपदाः परिजानन्तु भवन्तः । प्रत्यासन्नः खल्वसौ विवाहमहोत्सवः । यदादिशन्ति देवपादाः ।

पथि पथि घटयोच्चैस्तोरणानि प्रयत्नात्
प्रणय विविधवर्णा वैजयन्तीः समन्तात् ।
रचय रुचिरवीथीरत्नदीपोत्कराणां
प्रकिर घुसृणचूर्णं गन्धनीरञ्च तूर्णम् ॥

प्रगल्भः । (कर्णं दत्त्वा निःश्वस्योत्थाय ।) अये सद्य एव खल्वयं सम्प्रवर्तितः सम्प्रति परिणयमहोत्सवः । (वीक्ष्य ।) निवृत्ता वृष्टिः । तदिदानीं मया खल्वन्तःपुरासन्नतरैव सरणिरनुसरणीया । (निष्क्रम्य पुनः प्रविश्य च ।) एषैव सा । (परिक्रम्य । सदृष्टिक्षेपम् ।) हुम् । इहापि तावत् ।

इतस्ततश्चलन्त्येषा पताका परिदृश्यते ।
दरिद्रानाह्वयन्तीव रम्यहर्म्यापरिस्थिता ॥

(नेपथ्ये ।)

(२९ अइ विलासवदि ! केलिवदि ! लीलावदि ! लवङ्गिए ! कुरङ्गिए ! मुणालिए ! सुलक्खणे ! विअक्खणे ! भट्टिदारिआए जाणईए कङ्कणबन्धणेण विरएध

-

(२९) अयि विलासवति ! केलिवति ! लीलावति ! लवङ्गिके ! कुरङ्गिके !

विश्राहदिकवर्णं । ( इति मङ्गलातोद्यवाद्यध्वनिः शङ्खध्वनिरुलुलुध्वनिश्च । )

प्रगल्भः । ( कर्णं दत्त्वा नेपथ्याभिमुखं दृष्ट्वा च । ) अये चेटग्रौ किमपि गायन्त्यग्रा खल्विहैव दिशि दृष्टिं ददाते । ( इति परिक्रम्य सत्वरं निष्क्रान्तः । )

( ततः प्रविशतः कृत्ते पुष्पकरण्डकमादाय सीतापरिग्रहमङ्गलं सम्भावयन्त्यग्रा कौसुम्भवसनं धारयन्त्यग्रौ च चेटग्रौ । )

प्रथमा । (३०) धुश्र विश्रमिश्र-पिश्रश्र-वणु ।
वहइ मिश्रल लहु पवणु ॥

द्वितीया । (३१) भरिश्र सश्रल-गश्रणतलु ।
रसइ घणु श्र वरस जलु ॥

प्रथमा । (३२) हला लवङ्गिए ! साहु साहु । एसो दे पुरक्कारो । ( करण्डकं समर्पयन्ती सोत्प्रासम् । ) श्रवि उण जोव्वणम्मि चेश्र जीइदेसघरं गच्छ ।

कर्णाग्निकं । सुलक्षणं । विचक्षण ! भर्तृदारिकायाः ज्ञानकया कङ्कणबन्धनेन विरचयत निवाहदीक्षणम् ।

(३०) प्रथमा । धूतविकमितप्रियकवनः । वहति शीतलो लघु पवनः ॥

(३१) द्वितीया । भरितसकलगगनतलः । रसति घनश्च वर्षति जलम् ॥

(३२) प्रथमा । हला लवङ्गिके ! साधु साधु । एष ते पुरस्कारः । अपि पुनर्यौवन् एव जीवितेशगृहं गच्छ ।

द्वितीया। (३३) (तमादाय शिरसि संस्थाप्य च। सहासम्।)
हला मुणालिए! तं समीईणं भणासि। सच्चं। ण हु
प्पाएण इत्थीअणस्स दीहजीअणं सुहाअअं होज्जउ।

उभे (३४) णच्चइ विज्जुरि पुणु मअणु।
दहइ तरुण-पहिअ-मणु॥

(इति विविधभङ्ग्या नृत्यन्त्यौ सहस्ततालं गायतः।)

प्रथमा। (३५) (करण्डं पुनरादाय।) हला लवङ्गिए! पुरदो,
मञ्जुलवञ्जुलकुञ्जे
छप्पअ-चुम्बिअ-सुमुक्करो फुरइ।
देव्वच्चणावजुत्तं
भट्टिसुदाए इमं चिणुमो॥

द्वितीया। (३६) (निरीक्ष्य।) मुणालिए! एव्वंणेदं
(इत्युभे परिक्रम्य पुष्पावचयं रूपयतः।)

(३३) द्वितीया। हला मृणालिके! त्वं समीचीनं भणसि। सत्यम्। न खलु प्रायेण
स्त्रीजनस्य दीर्घजीवनं सुखावहं भवति।

(३४) उभे। नृत्यति विद्युत् न पुनर्मदनः। दहति तरुणपथिकमनः॥

(३५) प्रथमा। हला लवङ्गिके! पुरतः
मञ्जुलवञ्जुलकुञ्जे षट्पदचुम्बितसुमोत्करः स्फुरति।
देव्यर्चनोपयुक्तं भर्तृसुताया इमं चिनुमः॥

(३६) द्वितीया। मृणालिके! एवमेतत्।

प्रथमा । (३७) पुरस्तादवलोक्य । हला लवङ्गिए । अग्गदो चेअ दीसन्ति सारभवासिअदिसामुहाइं दाव पप्फुल्लाइं पुप्फाइं । ता कीस अग्गदो दिण्णदिट्ठी गच्छमि ।

द्वितीया । (३८) मुणालिए ! इदो कंपि सुवण्णजुहिअं तमाल-मिलिअं पुलएहि ।

प्रथमा । (३९ निःश्वस्य ) लवङ्गिए ! सच्चं । एदिणा

पाणिग्गहणे णवघण-

साम-वर-कर-कमलप्पिआ रम्मा ।

सरिसेक्खणेण सा मे

सिमिदिपहं आअआ सीदा ॥

द्वितीया । (४० अच्छरीअं । मुणालिए । ठाणे क्खु सुट्ठु मन्तेसि । णिव्वहणसमअम्मि ईदिसं दिस्सं आसि ।

(३७) प्रथमा । हला लवङ्गिके । अग्रत एव दृश्यन्ते सारभवासितदिङ्मुखानि तावत् प्रफुल्लानि पुष्पाणि । तत् कस्मादग्रतो दत्तदृष्टिर्गच्छसि ।

(३८) द्वितीया । मृणालिके । इतः कामपि सुवर्णयूथिकां तमालमिलितां पश्य ।

(३९) प्रथमा । लवङ्गिके ! सत्यम् । एतेन ।

पाणिग्रहणे नवघनश्यामवरकरकमलार्पिता रम्या ।

सदृशेक्षणेन सा मे स्मृतिपथमागता सीता ॥

(४०) द्वितीया । आश्चर्यम् । मृणालिके ! स्थाने खलु सुष्ठु मन्त्रयसि । पाणिग्रहणसमये ईदृशं दृश्यमासीत् ।

प्रथमा । (४१) (हर्षं सूचयन्ती ।) अवि जादिसो भट्टिदारिआ तादिसो जामाअरो त्ति णिव्वुअं मज्झ हिअअं । तं वा कधं मस्समि ।

द्वितीया । (४२ हला एत्थ किं मन्दव्वं । उइअसमाअमो कं ण रञ्जेइ । अहुणा हि दंसिअफलं विस्माणं पआवइस्स । (सानन्दमन्यतो दृष्टिक्षेपमभिनीय ।) मुणालिए ! इदो दाव महुअरो किंपि ढुंढुअन्तो देसु देसु लदाविड़वेसु कुसुमेसु कोड़रेसु अ आलुठन्तो परिघुम्मइ ।

प्रथमा । (४३) (पादाग्रे स्थित्वा निरूप्य च ।) अम्महे । एसो क्खु

भसलो णिच्चलपक्खं
रसलोहादो दलुच्चअन्तरिअं ।
अणविक्खन्तो दइअं
उम्मत्तो विअ परिब्भमइ ॥

(४१) प्रथमा । अपि यादृशी भर्तृदारिका तादृशो जामातेति निर्वृतं मम हृदयम् । त्वं वा कथं मन्यसे ।

(४२ द्वितीया । हला अत्र किं मन्तव्यम् । उचितसमागमः कं न रञ्जयति । अधुना हि दर्शितफलं विज्ञानं प्रजापतेः । मृणालिके ! इतस्तावन्मधुकरः किमपि गवेषयन्स्तेषु तेषु लताविटपेषु कुसुमेषु कोटरेषु चालुठन् परिघूर्णति ।

(४३) प्रथमा । अम्महे, एष खलु

भ्रमरो निश्चलपक्षां रसलोभाद्दलोच्चयान्तरिताम् ।
अनवेक्षमाणो दयितामुन्मत्त इव परिभ्रमति ॥

द्वितीया । (४४) (नाट्येन विलोक्य । ) हला सम्मं उवलक्खिअं तुमए ।

प्रथमा । (४५) अह्मो । सविसेसं परिघुम्मन्तो वि इमो क्खु सहअरिं ण पुलएइ ।

द्वितीया । (४६) ता महुअरीइ संजोएहि णं ।

प्रथमा । (४७) ( सकौतुकम् । ) एदिणा पज्जुण्णसरेण मञ्जरिं ताड़िअ महुआणणिच्चलं महुअरिं उट्ठावेमि । ( तथा कृत्वा । ) अह्मो । मञ्जरीए उट्ठिआइ ताइ सहअरीइ मिलिओ चञ्चरीओ क्खु इमो माहवीमण्डवं अहिरुहिअ महुरसं पिबन्तो सुहं वट्टइ । ( श्रान्तिमभिनीय । ) हला परिस्सन्त म्हि ।

द्वितीया । (४८) हला एदस्सिं विरइअ-णोमालिआ-लदा-विदाण-दंसणीए पाअवच्छाअम्मि णीलसिलापट्टए चेअ णिसिएहि । जाव अहं पि सुहासीणा बउला-

---

(४४) द्वितीया । हला सम्यगुपलक्षितं त्वया ।

(४५) प्रथमा । अहो सविशेषं परिघूर्णमानोऽप्ययं सहचरीं न पश्यति ।

(४६) द्वितीया । तन्मधुकर्या संयोजयैनम् ।

(४७) प्रथमा । एतेनेक्षुसहर्मेण दर्पेण मञ्जरीं ताडयित्वा मधुपाननिश्चलां मधुकरीमुत्थापयामि । अहो मञ्जर्या उत्थितया तया सहचर्या मिलितश्चञ्चरीकः खल्वयं माधवीमण्डपमधिरुह्य मधुरसं पिबन् सुखं वर्तते । हला परिश्रान्तास्मि ।

(४८) द्वितीया । हला एतस्मिन् विरचितनवमालिकालतावितानदर्शनीये पाद-

वलिं कुसुमत्थवअं अ विरइअ जधाणिद्दिट्ठमणुचिट्ठामि ।

( इत्युभे तथा कुरुतः । )

द्वितीया । (४९) ( कृत्यं समाप्य । पुरतो दत्तदृष्टिः । ) हला मुणालिए ! इदो हि ।

उग्गिण्णदब्भकवलो बालो बाहाविलेक्खणो ।
पेक्ख पेक्खइ मं वंक-ग्गीवं कीलाकुरङ्गओ ॥

उवणेमि मादरं दाव णं । ( इत्युभे परिक्रम्य निष्क्रान्ते । )

इति धनुर्भङ्गो नाम चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः ।

( ततः प्रविशति नागरिका । )

नागरिका । (१) आगत्त म्हि भट्टिदारिआइ सीदाइ ।

---

पक्षार्थे शीतशिलापट्ट एव निषीद । यावदहमपि सुखासीना बकुलावल्यां कुसुमस्तबकञ्च विरचय्य यथानिर्दिष्टमनुतिष्ठामि ।

(४९) द्वितीया । हला मृणालिके ! इतो हि,

उद्गीर्णदर्भकवलः बालो बाष्पाविलेक्षणः ।
पश्य पश्यति मां वक्रग्रीव क्रीडाकुरङ्गकः ॥
उपनयामि मातरं तावदेनम् ।

( इति चतुर्थोऽङ्कः । )

(१) नागरिका । आगतास्मि भर्तृदारिकया सीतया । यथा हञ्जे नागरिके !

जधा हञ्जे णाअरिए ! परिकप्पिआ दाव मोअअखण्डिआओ । अवि कधं विलम्बेइ अज्जो गोमुहो । ता गदुअ जाणेहि आअओ ण वेत्ति । (परिक्रम्य नेपथ्याभिमुखमवेक्ष्य च ।) का उण एसा तुरिअतुरिअं इह चेअ आअच्छइ । (निरूप्य ।) कधं कुरङ्गिआ ।

(ततः प्रविशति चन्दनोशीरादिकमादाय कुरङ्गिका ।)

नागरिका । (२) हला कुरङ्गिए ! किंणिमित्तं मं परिहरिअ एव्वं लहु लहु गच्छसि । (इति बलादेनां निवर्तयति ।)

कुरङ्गिका । (३) हला णाअरिए । मुञ्चेहि मं । आदिट्ठम्हि अज्जाइ सुणिदाइ । जहा हञ्जे कुरङ्गिए ! अदिमेत्तं रत्तिजाअरणकिलेसणीसहं मे सरीरं । ता चन्दणं चन्दमणिसिलासअलं उसीरं अ आणीअ सज्जीकरेहि त्ति । अणुचिट्ठिअं अ मए जहा आइट्ठं ।

परिकल्पितास्तावन्मोदकखण्डिकाः । अपि कथं विलम्बत आर्यो गोमुखः । तद्गत्वा जानीहि । आगतो न वेति । का पुनरेषा त्वरितत्वरितमिहैवागच्छति । कथं कुरङ्गिका ।

(२) नागरिका । हला कुरङ्गिके । किंनिमित्तं मां परिहृत्यैव लघु लघु गच्छसि ।

(३) कुरङ्गिका । हला नागरिके । मुञ्च माम्, आदिष्टास्मि आर्यया सुनृतया । यथा हञ्जे कुरङ्गिके ! अतिमात्रं रात्रिजागरणक्लेशनिःसहं मे शरीरम् । तच्चन्दनं चन्द्रमणिशिलाशकलमुशीरञ्चानीय सज्जीकुरुष्वेति । अनुष्ठितञ्च मया यथादिष्टम् ।

नागरिका । (४) (विहस्यात्मगतम् ।) णं किदिसी से बाधा । जा एव्वं उवसमिज्जइ । (प्रकाशम् ।) ता गच्छ तुमं ।

कुरङ्गिका । (५) (कतिचित् पदानि गत्वा विभाव्य पुनः प्रतिनिवृत्य । वैमनस्यं नाटयन्ती ।) हला णाअरिए ! वेआहिए क्खु पओसे विहिअगोआणमङ्गलाणं वराणं सुहाअमणमुहुत्तम्मि तं उण कहिं सि गअवई ।

नागरिका । (६) हला कुरङ्गिए ! तइ क्खु हं फलिहप्पासाअस्स सिरम्मि,जस्सिं रेहइ दाव सअंवहजन्तं तस्सिं विअ-क्खणादुइआ तं दाहिणेण चिट्ठन्ती सव्वं सुट्ठु पेच्छीअ ।

कुरङ्गिका । (७) (सौत्सुक्यम् ।) हला ता वण्णेहि कीदिसी क्खु पवरवरसज्जापरिवाड़ी हुवीअ त्ति । जीस सम्मं चेअ णिहालिअं तुमए ।

(४) नागरिका । ननु कीदृशी तस्या बाधा । येवमुपशाम्यते । तद्गच्छ त्वम् ।

(५) कुरङ्गिका । हला नागरिके ! वैवाहिके खलु प्रदोषे विहितगोदानमङ्गलानां वराणां शुभागमनमुहूर्त्ते त्वं पुनः कुत्रासि गतवती ।

(६) नागरिका । हला कुरङ्गिके । तदा खल्वहं स्फटिकप्रासादस्य शिरसि यत्र राजते तावत् स्वयम्बहयन्त्रं, तस्मिन् विचक्षणाद्वितीया तं दक्षिणेन तिष्ठन्ती सर्वं सुष्ठु अद्राक्षम् ।

(७) कुरङ्गिका । हला तद्वर्णय कीदृशी खलु प्रवरवरसज्जापरिपाटी अभूदिति । यस्मात् सम्यगेव निभालितं त्वया ।

नागरिका । (८) हला कुरङ्गिए । तं उण तइ कहिं आसि । जं दाणिमेव्वं पुच्छसि । ता एहि । राअमग्गं परिच्चइअ सिविरसण्णिवेसस्स अग्गदो इह णग्गोधतरुवरच्छाए खणं उववसिम्ह दाव । ( इत्युभे तथा कुरुतः । )

कुरङ्गिका । (९) ( सानुशयम् । ) अहं दाव मन्दभाइणी तइ क्खु उवाअण-वत्तु-पालण-कम्मस्स अज्जाइ सुणिदाइ णिओइआ अन्देउरम्मि ओचिट्ठीअ । सुणीअ अ केअलं महन्तं क्खु कोदुहलहल्लबोलं । ( जृम्भणं सूचयन्ती । ) हन्त तीसु वि रत्तीसु मज्झ मणा वि सइदव्वं णासि ।

नागरिका । (१०) हला णिसमेहि ।

कुरङ्गिका । (११) अवहिअ म्हि ।

नागरिका । (१२) हं वि थेरं थेरं वसेमि । अवि णाम

(८) नागरिका । हला कुरङ्गिके ! त्वं पुनस्तदा कुत्रासीः । यदिदानीमेव पृच्छसि । तदेहि । राजमार्गं परित्यज्य शिबिरसन्निवेशस्याग्रत इह न्यग्रोधतरुवरच्छाये क्षण-मुपविशावस्तावत् ।

(९) कुरङ्गिका । अहं तावन्मन्दभागिनी तदा खलूपायनवस्तुपालनकर्मणा आर्यया सूनृतया नियोजितान्तःपुरेऽवातिष्ठम् । अशृणवञ्च केवलं महान्तं खलु कौतूहलकलकलम् । हन्त तिसृष्वपि रात्रिषु मम मनागपि शयितव्यं नासीत् ।

(१०) नागरिका । हला निशमय ।

(११) कुरङ्गिका । अवहितास्मि ।

(१२) नागरिका । अहमपि स्तोकं स्तोकं वर्णयामि । अपि नाम नास्ति मे

णत्थि मे वश्रणाणं फणिन्दस्स विश्र सहस्सं दाव। जिणा हि सव्वं चेश्र पच्चेश्रं जधाजधं वस्सेउं पारेमि। (सवैदग्धग्रम्।) तत्थ किल पढ़मं दाव गढ़मज्झदो सएक्कस-क्के हिं भोसणदरगज्जणेहिं सश्रग्घीण मुहरीकरिज्जमाणे दिसामुह-णिवहे सरेणिक्कमेण दुमदुमाश्रमाण-दुन्दुहि-विन्द-विन्दस्स-विमाण-विम्ब-णिउरम्बं उवरिसश्रड़ं तउ-त्तिश्र-पउट्ट-मोरमुह-मणोहर-णोश्र-प्पश्रारं श्रारोविश्र-जीइश्रप्पाश्र-मिम्मउच्चावश्र-सालभञ्जिश्रा-पुञ्ज-समलंकिश्रं विश्रश्रवभ लिह--सिहरसालि--कीलासेल वलश्र--च्छलेण वरुणालश्रं विव समुच्छलिश्र-सपच्छ--च्छिदूधर-चक्कवाला डम्बरं चित्तम्बरधर-वज्जश्रर-णिश्रर-णिसेविश्र-सुसिरसु-श्रद-घणाणद्ध-णिरवज्ज-वज्ज-मणोज्ज-णिग्घोस--णिवभर-भ-रिश्र-णहो-मण्डलं श्राखण्डल-लोश-दुल्लह-महमुल्लत्थरणा-रश्रणमश्र-णाश्र--णश्रविविहमंविहाण-सुसज्जिश्र-गश्र-तुरश्र-

वदनानां फणीन्द्रस्येव सहस्रं तावत्। येन हि सर्वमेव प्रत्येकं यथायथं वर्णयितुं पार-यामि। तत्र किल प्रथमं तावद्दुर्गमध्यतः शतैकसंख्याकैर्भीषणतरगर्जनैः शतघ्नीनां मुखरी-क्रियमाणे दिशामुखनिवहे श्रेणीक्रमेण दुमदुमायमानदुन्दुभिवृन्दविन्दविमानविम्बनिकु-रम्बम् उपरिशकट तौर्यत्रिकप्रवृत्तमयूरमुखमनोहरनौकाप्रचारम् आरोपितजीवित-प्रायमयूरयोच्चावचशालभञ्जिकापुञ्जसमलङ्कृतं शतकाभ्रंलिहशिखरशालिक्रीडाशैलवलय-च्छलेन वरुणालयमिव समुच्छलितसपक्षक्षितिधरचक्रवालाडम्बरं चित्राम्बरधरवाद्यक-रनिकरनिषेवितशुषिरसुततघनानद्धनिरवद्यवाद्यमनोज्ञनिर्घोषनिर्भरभरितनभोमण्डलम्

रह-पदाइ-रूव-चउरङ्ग-विलास-वाहिणी-सणाहं अहिणअ-कप्पिआणप्प-फलकुसुमाराम-णिआम-रमणिज्जं रज्जन्तर-तुणामअ-परिच्छअ-वाहअ-जण-कर-मौलिअ-सोवणागअ-दण्ड-परिकलिअ-पुण्डरीअ-विब्भमाभिराम-धवलपड़ाआ-पड़ल-सङ्कुलं मङ्गलिअ-मञ्जुल-विज्जुआलोअ-विराअमाण-मणिदीव-माला-जालावली-विभाविभाविअ-दिअह-विब्भमं विअम्भमाण-माणिक्क-कञ्चण-मअ-दण्डच्चिअ-विइत्त-च्छत्त-चामर-माउर-व्वअणाहरिअ-सण्णिहिअबलाआवलि-वलिअ-बलभिच्चाव-विच्छेअ-विच्छुरिअं राअमग्गमेव्वं अवुव्वदंसणं सम्पाइअ पाड़िएक्कं पुप्फअरहेण समाअच्छन्तं अणुअच्छन्त-पुरन्धिजण-करिज्जमाण-महुर-मङ्गलगीदिअं चन्दमण्डलसङ्काइ विव णच्छत्तमालिआइ णाम हारलदाइ परिसोहमाणं मणिमअ-मउड़ादिम-

---

आखण्डललोकदुर्लभमहामूल्यास्तरणरत्नमयविविधसंविधानसुसज्जितगजतुरगरथपदाति-रूपचतुरङ्गविलासवाहिनीसनाथम् अभिनवकल्पितानल्पफलकुसुमारामनिकामरमणीयं रज्यमानरत्नोर्णामयपरिच्छदवाहकजनकरमौलितसौवर्णागण्डदण्डपरिकलितपुण्डरीक-विभ्रमाभिरामधवलपताकापटलसङ्कुलं सङ्घलितमञ्जुलविद्युदालोकविराजमानमणिदीप-मालाज्वालावलीविभाविभावितदिवसविभ्रमं विजृम्भमाणमाणिक्यकाञ्चनमयदण्डाञ्चितविचित्रच्छत्रचामरमायूरव्यजनाहृतसन्निहितबलाकावलिवलितबलभिच्चापविच्छेदविच्छुरितं राजमार्गमेवम् अपूर्वदर्शनं सम्पाद्य प्रत्येकं पुष्पकरथेन समागच्छन्तम् अनुगच्छत्-पुरन्ध्रिजनक्रियमाणमधुरमङ्गलगीतिकं चन्द्रमण्डलशङ्कयेव नक्षत्रमालिकया नाम

विड्डश्रं कुमारश्रचउक्कं जधाविहवपरिजणं पेच्छिश्र अच्छिसफलत्तणं गमिश्र म्हि संवुत्ता ।

कुरङ्गिका । (१३) (सखेदम् । दिट्ठिश्रा धणिश्रा सि तं । श्रहं उण श्रकिश्रपुस्सा णूणं दूहव म्हि । जिणा क्खु एव्वं णाम णड्ढिश्रा संवुत्ता ।

नागरिका । (१४) हला ण केश्रलं एद्दहमेत्तं । हुवीश्र क्खु अच्छेरं श्रग्गिचुस्मकीलणश्रं वि दाव ।

कुरङ्गिका । (१५) (सविषादम् ।) सच्चश्रं । एदं क्खु अदिट्ठवुव्वश्रं श्रम्ह । हला केण उण दक्खविश्रं ।

नागरिका । (१६) श्रज्जगोमुहस्स मुहादो उवस्सुश्रं । सव्वं दाव एदं पिश्रसुहिश्रस्स कोसल्लापइणो तणउव्वाहो त्ति सुवव्वपइणा पेरिएण विणिम्मिश्रं दंसिश्रं श्र विस्सकम्मेण त्ति ।

---

हारलतया परिशोभमानं मणिमयमुकुटादिमण्डितं कुमारचतुष्टयं यथाविभवपरिजनं प्रेक्ष्याक्षिसाफल्यं गतास्मि संवृत्ता ।

(१३) कुरङ्गिका । दिष्ट्या धन्यासि त्वम् । अहं पुनरकृतपुण्या नूनं दुर्भगास्मि । येन खल्वेवं नाम वञ्चिता संवृत्ता ।

(१४) नागरिका । हला न केवलमेतावन्मात्रम् । अभूत् खल्वाश्चर्यमग्निचूर्णक्रीडनकमपि तावत् ।

(१५) कुरङ्गिका । सत्यम् । एतत् खल्वदृष्टपूर्वमस्माकम् । हला केन पुनर्दर्शितम् ।

(१६) नागरिका । आर्यगोमुखस्य मुखादुपश्रुतं, सर्वं तावदेतत् प्रियसुहृदः कोशलापतेस्तनयोद्वाह इति सुपर्वपतिना प्रेरितेन विनिर्मितं दर्शितञ्च विश्वकर्मणेति ।

कुरङ्गिका । (१७) (सविस्मयम् ।) संभाविज्जइ सव्वं चेअ रहुवंसे । ( ऊर्ध्वं दृष्ट्वा । ) हला सण्णिहिदो क्खु भट्टिदारिआए सिणाणमुहुत्तओ । ( इत्युभे परिक्रम्य निष्क्रान्ते । )

( प्रवेशकः । )

( ततः प्रविशत्यन्तःपुरमिलितदेव्यायतनरत्नकुट्टिमन्यस्त-राङ्कवासनोपविष्टा विश्लिष्टकुन्तला सीता, माल्यं रचयन्ती सूनृता च ।

सीता । (१८) ( पुष्पादुपहारेण देवीमभ्यर्च्य तामुपवीणयन्ती सास्रं गायति । )

तिलोअपावणि णिव्वावसमणि तिउणसालिणि हे ।
मोहविहाइणि भुअणमोहिणि हिमउसोहिणि हे ॥
सिवविस्साणिणि अमिवणासिणि सिवाणि जणणि हे ।
सोहग्गकारिणि पदसुहाइणि जअ कच्चाअणि हे ॥

सूनृता । (१९) (सोत्कण्ठम्) कीस उण चिराअदि कुमारओ ।

---

(१७) कुरङ्गिका । सम्भाव्यते सर्वमेव रघुवंशे । हला सन्निहितः खलु भर्तृदारिकाया स्नानमुहूर्तः ।

(१८) सीता । त्रिलोकपावनि निस्तापशमनि त्रिगुणशालिनि हे ।
मोहविघातिनि भुवनमोहिनि हिमगुशोभिनि हे ॥
शिवविश्राणिन्यशिवनाशिनि शिवानि जननि हे ।
सौभगकारिणि पतिसुखभागिनि जय कात्यायनि हे ॥

(१९) सूनृता । कस्मात् पुनश्चिरायति कुमारः ।

( नेपथ्ये । अर्धप्रविष्टः । )

रामः । ( साभिप्रायं निरूप्य । ) अये कथमेषा वीणां वादयन्ती स-रि-ग-म-प-ध-नीति सप्तस्वरैरुच्चावचारोहावरोहमनोहरं गायति । ( मुहूर्तमाकर्ण्य । ) हन्त सुधासिन्धुमिवावगाढोऽस्मि । ( सहर्षम् । )

वामांसाहितवीणा-
क्वाणकलालापनवनवोल्लासाम् !
कान्तां पुलकाक्रान्तां
चलदलकान्तां पुनः कलये ॥

( सचमत्कारम् । ) अहो नु खलु किंस्वित् स एव पुनः स्वप्नोऽयम् । ( क्षणं तूष्णीम्भूय । )

स्वप्नो वा विभ्रमो वापि माया वा तत्त्वमेव वा ।
निश्चेतुं न हि शक्नोमि गीतिरागेण मोहितः ॥

( सासूयमिव । )

निःशङ्कमङ्कलीनः
स्पृशस्यमुष्याः कुचान्तराभोगम् ।
धन्यस्त्वमेव यदियं
प्रवाल ! बाला स्वयं वृणुते ॥

( इति प्रविश्य किञ्चिदग्रतो गत्वा दूरानतशिराः कपोतहस्तकेन देवीं प्रणमति । )

सीता । (२०) (निरीक्ष्य । स्वगतम्) अम्मो । कहं अज्जउत्तो । (इति त्वरया वीणां विहायोत्थाय च व्रीड़ां नाटयति ।)

रामः । अलमलमायामेन । (इत्याकर्णगण्डमण्डलचुम्बन-लोलुभस्येव सीतायाः कर्णाभरणस्य चापल्यं लक्षयं-श्चित्रार्पित इव स्थितः ।)

सूनृता । (२१) (परिवृत्य दृष्ट्वा ससम्भ्रममुत्थाय च ।) अवि साअदं पिअसहीहिअआणन्दणचन्दणद्दुमस्स । (इति स्निग्धदृष्ट्या पश्यन्ती सादरं कुसुमस्तवकमुपहरति ।)

रामः । (साग्रहमादाय ।) अनुगृहीतोऽस्म्यनया सम्भावनया । (सीतां प्रति ।) प्रिये ! निर्वृतं मे हृदयम् । क्रियतां पुनः सङ्गीतकम् ।

सीता । (२२) (सानुरागमात्मगतम् ।) जाव क्खु मिरिमुहचन्दं पेक्खामि अज्जउत्तस्स दाव अणीस म्हि हिअअस्स । ता कहं णाम गाइस्सं । (सविनयमहसन्त्यपि हस-न्मुखीव । प्रकाशम् ।) चिरं मे वादअन्तीए णीस-हाइं अङ्गाइं । ता दाणिं मरिसेदु । (इति सखीं पश्यति ।)

(२०) सीता । अम्बा । कथमार्यपुत्र ।

(२१) सूनृता । अपि स्वागत प्रियसखीहृदयानन्दनचन्दनद्रुमस्य ।

(२२) सीता । यावत् खलु श्रीमुखचन्द्रं पश्यामि आर्यपुत्रस्य तावदनीशास्मि

सूनृता । (२३) महाभाअ ! अदिविअ परिस्सन्ता मे पिअसही । उल्लुल्लराअकवोलदलुब्भिस्सस्सेअलवाए पेक्खदु से वेवन्ति अग्गहत्थाओ । सङ्गीदअं णिच्चं जेव्व सुणिस्सदि । ण हु सहआरस्स अदिमुत्तलदाए किदावलम्बस्स लदाणच्चण-दंसणं दुल्लहं भवे ।

रामः । ( स्वगतम् । ) इति हि भोश्चित्रम् । इयं खलु नर्तितुमपि जानातीति भङ्ग्या प्रकटितम् । (प्रकाशम् ।) प्रिये ! सम्यगुक्तं प्रियसख्या । तथाहि । तव खलु,

श्रमसलिलविन्दुजाल-
च्छलतश्चञ्चलदृगञ्चले ! कलये ।
उरसिजपुगारियुग्मं
दत्तार्घ्यमिव स्मरेणैतत् ॥

( सीता सलज्जास्मितं वदनमवनमयति । )

सूनृता । (२४) ( ससम्भ्रमम् । ) इमिणा हि पन्थिणा एदु

हृदयस्य। तत् कथं नाम गास्यामि । चिरं मे वादयन्त्या निःसहान्यङ्गानि । तदिदानीं मर्षयतु ।

(२३) सूनृता । महाभाग ! अतीव परिश्रान्ता मे प्रियसखी । आर्द्रार्द्ररागकपोल-दर्शोद्भिन्नस्वेदलवायाः पश्यत्वस्या वेपेते अग्रहस्तौ । सङ्गीतकं नित्यमेव श्रोष्यति। न खलु सहकारस्यातिमुक्तलतया कृतावलम्बस्य लतानर्तनदर्शनं दुर्लभं भवेत् ।

(२४) सूनृता । अनेन हि पथा एतु कुमारः । एतत्तावन्मणिहर्म्यम् । अत्र सर्वं-रत्नासनं सनाथीकरोत्वार्यः ।

कुमारश्रो । ( सीतारामाभ्यां सह निष्क्रम्य पुनः प्रविश्य सोपानारोहणं नाटयित्वा च । ) एदं दाव मणिहम्मं । एत्थ खणं रअणासणं सणाहीकरेदु अज्जो । ( इति तदुपनयति । )

रामः । यदादिशति प्रियसखी । इत्युपविशति । )

सूनृता । (२५) अहुणा अब्भणुजाणादु सहीए मङ्गल-समालम्भणादिकप्पणस्स ।

रामः । एवमस्तु पुनराचार इति । अन्यथा निष्प्रयोजनमेव ।

आत्मनैवात्मनः शोभा-जनिका जानकीतनूः ।
दीपप्रभा हि नेवान्यं प्रभासकमपेक्षते ॥

सूनृता । (२६) ( सहर्षम् । ) सहि ! इदो इदो । ( सीतां पाणौ गृहीत्वा परिक्रम्य च । ) एदं वेसघरं । इह दाव णिसिदेहि । जाव क्खु अहं तुह संविहाणअं कप्पेमि । ( इति कनककर्णिकामण्डितमहादर्पणस्य पुरस्ताद्द्विरदरदमयचतुष्किकां निर्दिशति । )

सीता । (२७) तह । ( इति नाट्येन तथा करोति । )

(२५) सूनृता । अधुनाभ्यनुजानातु सख्या मङ्गलसमालम्भनादिकल्पनाय ।

(२६) सूनृता । सखि । इत इत । इदं वेशगृहम् ॥ इह तावन्निषीद । यावत खल्वहं तव संविधानकं कल्पयामि ।

(२७) सीता । तथा ।

राम:। (परितो निरूप्य। स्वगतम्।) स्थाने खलु समुचितरुचिपरिकलितेयं परिवर्हपरिपाटी। मन्ये मणिमयकुट्टिमं तावदिदं शयननिकेतनं मे हृदयेश्वर्याः। अहो नु खलु मनोज्ञता तावदमुष्य। तथाहि।

सुवर्णशाखार्पितरत्नदीपा
सालेख्यविम्बा मणिचित्रभित्तिः।
मुक्तावलीगुच्छलमद्वितानां
पर्यङ्कशय्या व्यजनाञ्चिता च॥

(विवृत्तकन्धरं पश्चाद्विलोक्य। अये स्थूलस्थूलमसृणतरराङ्कवास्तरणे कक्षान्तरेऽस्मिन् संलक्ष्यन्ते सुरचितानि तावद्दारवशिल्पफलकेषु सुकल्पितरक्तांशुकवेष्टनानि बहूनि खलु पुस्तकानि। सकौतुकं तत्र प्रवेशमभिनीय। वेष्टनाक्षराणि वाचयन्। "सीदाए संकलिदा पाचअसिक्खा"। (सहर्षम्।) अये पाकक्रियाकुशलासौ ग्रन्थकर्त्री च मे गृहलक्ष्मीः। (समन्तादवलोक्य।) ननु न केवलमियं पुस्तकशालिका चित्रशालिका च मम जीवितेश्वर्याः। (परिक्रम्य।) इह हि तावत्,

सन्ति सीवनयन्त्राणि तूलोर्णाकोषतन्तवः।
तूलिकावर्णकादीनि चित्रोपकरणाणि च॥

(किञ्चिदग्रतो गमनमभिनीय।) अपि च।

राजन्ति वेणुवीणाद्याः सपुष्पाः पुष्पधानिकाः ।
गन्धवस्तूनि रम्याणि कालयन्त्राणि चान्यतः ॥

( इति तत्र गाङ्गेर्वाञ्चितकाञ्चनासनमध्यास्य परिदर्शनं नाटयति । )

सूनृता । (२८) (दन्तिदन्तनिर्मितमञ्जूषात आभरणानि समाकलयन्ती विचिन्त्यात्मगतम् । ) कधं णाम कुमारओ एआइ अस्समंकन्तहिअओ विअ तुन्हिक्को णिसिदेदि । ता दाणिं किंपि विणोअट्ठाणं उवहरेमि । (दृष्टिमभिनीय ।) आं । संपद चित्तसालिअमलंकरेदि । ( सत्वरं तत्र प्रविश्य पुस्तिकामादाय च । प्रकाशम् । ) महाभाअ । इअं हि वीहिआपुत्थिआ । ( इत्युपनीय पुनर्गर्भगृहं विशति । )

रामः । सस्मितमादाय तत्र विविधाः प्रतिकृतीर्वीक्षमाणः सीतायाः शैशवप्रतिकृतिमभीक्ष्णं परीक्ष्य ।) अहो नु खलु

आलोलालकशैवाल-वलिताद्वदनाम्बुजात् ।
बालायाः स्मितमाध्वीकं मारन्ध्रव्याजमेजते ॥

( इति तथैव कुर्वन् स्थितः । )

(२८) सूनृता । कथं नाम कुमार एकाक्यन्यसक्रान्तहृदय इव तूष्णीं निषीदति । तदिदानीं किमपि विनोदस्थानमुपहरामि । आम् । सम्प्रति चित्रशालिकामलङ्करोति । महाभाग ! इयं हि वीथिकापुस्तिका ।

सीता । (२९) ( ससन्तोषम् । ) सहि ! सुउमारो ते पओओ ; मज्झ एव्व हिअएण मन्तिदवदी सि ।

सूनृता । (३०) ( पेटकमुद्घाट्य । ) सहि ! रमणीअदरो क्खु रअणचूड़ो ।

सीता । (३१) हला कुदो क्खु अअं ।

सूनृता । (३२) एसो तुज्झ पिउच्छाए पेसिदो । ( इति नाट्येन प्रसाधयति । )

सीता । (३३) सहि ! अवुव्वं दाव माणिक्कमकड़बन्धं अज्जउत्तस्स । किं वा तुमं मस्सुसि ।

सूनृता । (३४) सच्चअं । जधा कहेमि तधा तं । सुणिज्जइ क्खु इणं णिज्जरसिप्पिणा कप्पितं पसादीकिदं उणताड़आदिवहावज्जिदेण सअक्कदुणा रामदेअस्स त्ति । सपरिहासम् । ) सहि ! वइदेहि ! णं राहवो दाव,

(२९) सीता । सखि । सुकुमारस्ते प्रयोगः । ममैव हृदयेन मन्त्रितवत्यसि ।

(३०) सूनृता । सखि । रमणीयतरः खलु रत्नचूडः । (रत्नवलयावली ।)

(३१) सीता । हला कुतः खल्वयम् ।

(३२) सूनृता । एष तव पितृष्वस्रा प्रेषित ।

(३३) सीता । सखि ! अपूर्व तावन्माणिक्यमकुडबन्धम (सव्यापसव्ययज्ञोपवीताकारशृङ्खलारूपमाणिमयग्रीवाभरणम् । ) आर्यपुत्रस्य । किं वा त्व मन्यसे ।

(३४) सूनृता । सत्यम । यथा कथयमि तथा तत् । श्रूयते इदं निर्जरशिल्पिना कल्पित प्रसादीकृत पुनस्ताडकादिवधावर्जितेन शतक्रतुना रामदेवायेति । सखि । वैदेहि । ननु राघवस्तावत् ।

कान्तं कुन्तलहत्थं
बंधिउमह दे कुदूहली महइ ।
सुहए ! सुहंजुणो से
अहिट्ठमहिणन्दिउं जुत्तं ॥

सीता । (२५) ( स्वगतम् । ) हुं । एत्तिअभाअधेआणं भाअणं संवुत्तो क्खु अअं जणो । ( सवितर्कम् । ) धुअं परिहासो एसो । ( इति मूर्धानं धूनयति । )

सूनृता । (२६) (सोल्लुण्ठम् ।) सहि । भुइट्ठं अदक्खिणा दाणिं सि तुमं । कीस णु एत्थ ओअस्सं पाअडेसि ।

सीता । (२७) ( सूनृताया मुखमुदीक्ष्य दरस्मितं । ) सहि ! मा कुप्प । किं कुणमि मन्दभाइणी । अवत्तवा एत्थ अवरज्झदि । ण पुणो अहं ।

कान्तं कुन्तलहस्तं बन्धुमथ ते कुतूहली काङ्क्षति ।
सुभगे ! सुभगयोरस्याभिप्रेमाभिनन्दयितुं युक्तम् ॥

(२५) सीता । हुम् । एतावद्भागधेयानां भाजनं संवृत्तोऽयं जनः । ध्रुवं परिहास एषः ।

(२६) सूनृता । सखि । भूयिष्ठमदक्षिणेदानीमसि त्वम् । कस्मान्नु अत्र औदास्यं प्रकटयसि ।

(२७) सीता । सखि ! मा कुप्य । किं करोमि मन्दभागिनी । अपत्रपा चापराध्यति । न पुनरहम् ।

सूनृता । (३८) ( नाट्येन केशपाशमाबध्य । ) अइ लज्जालुए !
इदं कोसेअदोग्गं सअं जेव्व परिधेहि ।

( सीता समुत्थाय नाट्येन परिधत्ते । )

सूनृता । (३९) (गन्धवारिपुष्पसारादिभिस्तामधिवासयन्ती ।)
सहि ! अवसिदपसाहणा सि । ता दाणिं पेक्खसु दप्पणे ।
केरिसो वा अङ्गेसु दे भूसणविणिओओ संपाइदो ।

सीता । (४०) (तथा कृत्वा ।) सहि ! अच्छरीअं दे णिउणं ।
( स्मितं विधाय ) अहिलसेमि दाणिं कुमारी भविदुं ।

सूनृता । (४१) (सस्नेहं सीतायाः प्रफुल्लपाटलकुसुमकल्पकपो-
लमङ्गुलिभ्यां पीडयित्वा तया सह राममुपसृत्य ।
सस्पृहम् ।) महाभाअ ! णहि णहि । वअस्स ! पच्चक्खो
वो अणुराओ । णं दिण्णा क्खु इअं दे तादजणएण ।
तधा वि मुसहं जेव्व उण एव्वं मुहरेदि मं । एसा णो

(३८) सूनृता । अयि लज्जालुके ! इदं कौषेययुग्मं स्वयमेव परिधेहि ।

(३९) सूनृता । सखि ! अवसितप्रसाधनासि । तदिदानीं प्रेक्षस्व दर्पणे । कीदृशो-ऽङ्गेषु ते भूषणविनियोगः सम्पादितः ।

(४०) सीता । सखि । आश्चर्यं ते नैपुण्यम् । अभिलषामीदानीं कुमारी भवितुम् ।

(४१) सूनृता । कुमार ! नहि नहि । वयस्य ! प्रत्यक्षो युवयोरनुरागः । ननु दत्ता खल्वियं ते तातजनकेन । तथापि मनस आकुलतैव पुनरेवं मुखरयति माम् । एषा नः प्रियसखी यथा चिरं यावद्धृदयस्य निर्वृतिस्थानं भवति तथा निर्वर्ततां । नन्विदानीम् ।

पिअसही जधा चिरं जाव हिअअस्स णिव्वुदट्ठाणं होदि तधा णिव्वत्तेदु । णं दाणिं ।

आहरणस्साहरणं
अपि हिअअस्स प्पसाहणं किंपि ।
चउसाअरपुहवीए
गेण्हदु णं कस्सआरम्भणं ॥

( इति सीताया हस्तं रामस्य हस्ते समर्पयति । )

रामः । सबहुमानं प्रतिगृहीतः सखीजनप्रसादः ।

सीता । (४२) (स्वगतम् ।) एदेण पुणो मसिणसोम्मसीअलेण अज्जउत्तफंसेण सिज्जन्तणीसहविअत्थो वेवदि अवसो विअ मे हत्थो । (इति स्पर्शाद्यमभिनयति । )

रामः । ( स्वगतम् । ) अहो सौकुमार्यम् ।

स्त्रीमयनिर्माणविधौ
विधातुरेषा नु मानसी सिद्धिः ।
करतलकलनान्नैवं
सुकुमारत्वं भवेद्वपुषः ॥

आभरणस्याभरणमपि हृदयस्य प्रसाधनं किमपि ।
चतुःसागरपृथिव्या गृह्णात्वेतत् कन्यकारत्नम् ॥

(४२) सीता । एतेन पुनर्मसृणसौम्यशीतलेनार्यपुत्रस्पर्शेन सिद्यन्निःसहविपर्यस्तो वेपतेऽवश इव मे हस्तः ।

( साभिलाषं निरूप्य । )

सुधाकरकरस्पर्शादुद्भिन्नपुलकाङ्कुरा ।
राजतीयं मधोः सङ्गाद्बालचूतलता यथा ॥

( प्रकाशम् । ) सखि ! साधारणेऽप्यमुष्य सरस्वानिव मे गभीरोऽसौ प्रणयः । तदद्य खलु सर्वथानुगृहीतोऽस्मि ।

सीता । (४३) (साभिप्रायम् ।) अज्जउत्त ! अज्ज क्खु मे सहत्थावचिदेहिं कुसुमेहिं विरइदा णं सहीए रमणिज्जा इअं माला । जइ अणुग्गहो ममोवरि ता खणं दे समासाएदु कण्ठावलम्बणमहग्घत्तणं । ( इति पादाग्रे स्थिता नाटयेन कण्ठे ददाति । )

रामः । अयि जीवितेश्वरि ! तत् कथमनुग्रहेऽप्यभ्यर्थना । ( इति शिरोनमनं नाटयित्वा धारयति । )

सीता । (४४) (स्मृतिं रूपयित्वा । ) णारुहदि चिरं क्खु अङ्गुलिविओअं दाव अङ्गुलीअअं अज्जउत्तस्स । ( इति स्वाङ्गुल्यास्तदुन्मोचयति । )

(४३) सीता । आर्यपुत्र ! अद्य खलु मे स्वहस्तावचितैः कुसुमैर्विरचिता ननु सख्या रमणीयेयं माला । यद्यनुग्रहो ममोपरि तत् क्षणं समासादयतु भवतः कण्ठावलम्बनमहार्घत्वम् ।

(४४) सीता । नार्हति चिरं खल्वङ्गुलीवियोगं तावदङ्गुलीयकमार्यपुत्रस्य ।

रामः । (दृष्ट्वा प्रत्यभिज्ञाय च । सलज्जास्मितं ।) अयि तदिदं यथास्थितमेवास्तु । न खलु तावदसुलभस्थानभ्रंशितया शोचनीयं भवतु । (इति नाट्येन तथा करोति ।)

(नेपथ्ये । अस्फुटम् ।) हृदयेश्वरि ! क्वासि । किमेवं नाम मामुपहससि ।

सुतनु ! प्रसीद मा मां
त्वङ्गावविभावितान्तरं मुञ्च ।
आदिमदर्शनदिवसात्
प्रभवसि मे हृदयराज्यस्य ॥

अथवा किमनेन तावदरण्यरुदितेन । सर्वथा हतोऽस्मि मन्दभाग्यः ।

विच्छिन्नः समयः स यत्र सुमुखी साक्षान्मया लक्षिता
नातीताः कति नाम हन्त दिवसास्तां ध्यायतो मे पुनः ॥
यत्राहं चिरमासमेष विषयो दूरान्तरः सिंहलः
प्रत्याशे ! रचितोऽञ्जलिः करुणया दीनो जनस्त्यज्यताम् ॥

(सर्वे सविस्मयं श्रवणं नाटयन्ति ।)

रामः । (ससन्देहम् ।) सखि ! किं न्विदम् ।

(पुनर्नेपथ्ये । रुद्धकण्ठमिव ।) हा सर्वतः कालरात्रिमिव पश्यामि । अहह कम्पते मे हृदयम् । विकलानि खल्विन्द्रियाणि । निःसरन्तीव प्राणाः । (सकरुणम् ।) हा तात !

निष्करुण ! अद्य परिणतं ते द्रविणतृष्णायाः फलम् । हा अम्ब ! सहजस्नेहकातरहृदये ! हतासि कृतान्तहतकेन । हा भगिनि ! हा हतभागिनि ! हा कुलपांशुले ! किमपराद्धं मया तव . अद्य खलु पूर्णास्ते मनोरथाः । धिङ्मे भागधेयम् ।

सूनृता । (४५) (स्मरणमभिनीय ।) अम्मो अज्ज क्खु अस्मचित्तदाए विसुमरिदं मए किम्पि रहस्सं । ता दाणिं सुणादु कुमारओ । हिओ किल णिसामुहे उवाअणपुम्पाइं पेड़आइं अन्तेउरदुआरं पावइअ वाहिअवग्गे विणिग्गदे । दिट्ठिआ ।

तक्खणादो सङ्कमाणे पावं जेव्व मणम्मि मे ।
आअआ झत्तिअं अज्जा बुद्धिसेणा मअन्तिअं ॥

तइ बलवं उक्कण्ठिदा क्खु सा पेड़आइं पाड़िएक्कं सव्वाइं परिक्खिअ देसु एक्कं जेव्व णिक्किसिअ ममेव्वं

(४५) सूनृता । अम्मो, अद्य खल्वन्यचित्ततया विस्मृतं मया किमपि रहस्यम् । तदिदानीं शृणोतु कुमारः । ह्यः किल निशामुखे उपायनपूर्णानि पेटकान्यन्तःपुरद्वारं प्रापय्य वाहिकवर्गे विनिर्गते । दिष्ट्या ।

ततक्षणाच्छङ्कमाने पापमेव मनसि मे ।
आगता झटित्यार्या बुद्धिषेणा मदन्तिकम् ॥

तदा बलवदुत्कण्ठिता खलु सा पेटकानि प्रत्येकं सर्वाणि परीक्ष्य तेष्वेकमेव

आइट्टवदी। जधा वच्छे! सुणिदे! कोदुग्रावहं दाव एदं अवस्सं जेव्व कुमारअरामभद्दस्स दंसिदव्वं तुए त्ति ।

रामः । (स्वगतम् ।) किं तावदुत्कण्ठाकारणमार्यायाः । (इत्युत्कलिकां रूपयति ।)

सूनृता । (४६) तदो मए वि महन्तेण पआसेण तं उण णोह-लमञ्जुसब्भन्तरए सञ्चारिदं अत्थि । (साकूतम् ।) अब्भ-त्येमि अहुणा पाअप्पणेण कोसघरं पवित्तीकरिअ पेक्खदु तं महाभाओ ।

रामः । (स्वगतम् ।) इह ममापि संवर्धितं कौतूहलम् । (प्रकाशम् ।) अनियन्त्रणानियोगो हि सखीजनः । तदा-दिशतु पन्थानम् ।

सूनृता । (४७) इदो इदो अज्जो । (सीतारामाभ्यां सह सोपानावतरणं रूपयित्वा निष्क्रम्य पुनः प्रविश्य च ।)

निष्कृष्य मामेवमादिष्टवती । यथा वत्से! सूनृते! कौतुकावहं तावदेतदवश्यमेव कुमाररामभद्रस्य दर्शयितव्यं त्वयेति ।

(४६) सूनृता । ततो मयापि महता प्रयासेन तत् पुनर्लौहमञ्जूषाभ्यन्तरे सञ्चारितमस्ति । अभ्यर्थयेऽधुना पादार्पणेन कोषगृहं पवित्रीकृत्य पश्यतु तन्महाभागः ।

(४७) सूनृता । इत इत आर्यः । एतत् कोषगृहद्वारम् । चतुरिके! अवकाशं सम्पादय ।

एदं कोसघरदुआरं। (तत्रस्थितां प्रतीहारीं प्रति।) चदुरिए! कोआसं सम्माएहि।

प्रतीहारी। (४८) (उन्मील्य नेत्रे दृष्ट्वा। ससम्भ्रमम्।) वन्दामि। (इति यन्त्रद्वारमुद्घाट्य निष्क्रान्ता।)

सूनृता। (४९) इअं कुञ्चिआ। ता इमीए मञ्जुसं क्खु इमं उग्घाडिदं करेदु। (इत्यञ्चलादुन्मुच्य रामस्य पाणौ कुञ्चिकां ददाति।)

रामः। (सकौतुकं तथा कृत्वा। सरोषविस्मयम्।) कस्त्वं दुरात्मन्! (नेपथ्याभिमुखमालोक्य।) असिरसिः।

(प्रविश्य।) प्रतिहारी। (५०) (ससम्भ्रमविस्मयम्।) एसो खग्गो। (इति सकोषमसिमुपनीय दूरतः स्थिता।)

राम आदाय सधैर्यमसिं कोषादाकर्षति।)

सीतासूनृते। (५१) (अपवार्य।) एसो किं एदस्स हिअअसोणिदेण इच्छदि दाव रोसवण्हिं णिव्वावेदुं। कुदो णु निव्वोलइ णाम। (इति ससाध्वसं पश्यतः।)

(४८) प्रतीहारी। वन्दे।

(४९) सूनृता। इयं कुञ्चिका। तदनया मञ्जूषामिमामुद्घाटितां करोतु।

(५०) प्रतीहारी। एष खड्गः।

(५१) सीतासूनृते। एष किमेतस्य हृदयशोणितेनेच्छति तावद्रोषवह्निं निर्वापयितुम्। कुतो नु मञ्जूषैषं मज्जिनयति नाम।

पुरुषः। (सत्वरं सभयञ्च मञ्जूषातो निर्गम्य यज्ञोपवीतावलम्बं पाणिं दक्षिणमुद्यम्य च।) अब्रह्मण्यम्। अब्रह्मण्यम्। विजयतां देवः। (स्वगतम्।)

बालेनेव मया व्यालो मत्तेनेव महासिः।
अन्धेनेव कथं पद्भ्यामाक्रान्तो ज्वलनो ज्वलन्॥

(दीर्घं निःश्वस्य।) अये सैवयमस्मन्मनोरथस्थली। (इतीष्टजनं सकृदेव निध्याय। स्थितः।)

रामः। (निपुणं निरूप्य। स्वगतम्।) अपि नाम ब्राह्मणकुमारोऽसौ। (इति शनकैः शिरो नमयति।)

पुरुषः। (सप्रश्रयं कृताञ्जलिः।)

पवित्रनामधेयाऽसि प्रशान्तहृदयोऽसि च।
देव! दैवप्रसादान्मे नीतोऽसि नेत्रगोचरम्॥

(अश्रूणि विसृजन्नेव।) मा मां विप्रबलीवर्दं मारयतु। (इति तत्पादयोः पतितुमीहते।)

रामः। (निवार्य।) अपि कृतं कृतमसमीचीनाचरणानुबन्धेन। (सानुग्रहम्।) अधुना खलु कथय यावत्। कस्त्वं, कुतः पुनः, किमुद्दिश्य, केन, कथं वा पेटकाभ्यन्तरं नीतोऽसीत्यामूलं श्रोतुमिच्छामि।

पुरुषः। (जानुभ्यां भूमिं स्पृष्ट्वा। बद्धाञ्जलिः।) अपि नाम विदाङ्करोतु देवः॥

राम:। दत्तावधानोऽस्मि।

पुरुष:। पुरा किल प्रभवता भवता प्रत्यक्षीकृत एव महाराजजनकस्य परिषदि सुतरां प्रगल्भमान: प्रगल्भो नाम पापस्य मे जनक:। नन्वाख्यातोऽपि जनन्या खल्वहं खर्व इति मतिप्राखर्यविमर्शनात् प्रखरमतिरिति नाम्ना व्यपदिष्टोऽस्मि पुनर्ज्येष्ठतातचरणै:। एकदा खलु मिथिलाया: प्रतिनिवृत्तेन प्रवृत्तेन रहसि पितरं मे किमप्याख्यातुं रक्षोराजदशमुखेनाङ्गीकृत्य कृतकृत्यतायां तत्र भूरितरभूमिदानं तदानीमेव माग्रहं ग्राहयित्वा बहून्यपि धनानि तं पुन: सन्धुक्षितधनलोभं सम्पाद्य सम्पादकसहकारितया सह तेनाहं मिंहलादिहास्मि विदेहेषु प्रेषितो नाम। यत:।

श्रयन्ति केचिद्धनिनो धनाशया
त्यजन्ति जायाञ्च सुतञ्च केचन।
ददत्यसून् केऽपि वसुप्रियास्तया
धनेन धन्यं धनिनां हि जीवनम्॥

किञ्च। यशस्तेज: श्रुतं ज्ञानं रूपं शीलं कुलं वय:।
धनेन लभ्यते सर्वं धनमेतैर्न लभ्यते॥

राम:। यत् सत्यम्। इह खलु धनमेव परमसुखसाधनमिति मन्यन्ते नाम मनीषिणोऽपि। तत्र परिमूर्च्छित-

तया विशेषतस्तावन्मम हृतीयं धनलिप्सा ब्राह्मबन्धुष्वेव । (पुरुषं प्रति ।) ततस्ततः ।

पुरुषः । अथ खल्विह भावितभुवनस्य भगवतः शतानन्दस्य चरणान्तादान्वीक्षिकीशिक्षापदेशेन विद्यार्थिवेशपरिग्रहात् तदन्तेवासितामभ्युपगतोऽहमस्मि । तत्र पूर्वेद्युस्तावत् प्रदोषसमये ममयावसथपथं नः प्रचुराण्युपायनान्याकलय्य पेटकपटलेन जनकराजान्तःपुरमुपसर्पतः कांश्चिद्वाहकान् निरीक्ष्य खल्वसमीक्ष्यकारिणा तातेन तेष्वेकं प्रवीणतरमपि द्रविणदानेन निघ्नीकृत्य निर्विघ्नं पेटकाभ्यन्तरे संस्थाप्यैवमनुशिष्टोऽस्मि । वत्साद्य पुष्पशयनमहोत्सवासवेन प्रमत्तप्राये तत्र राजकुलपरिजनवर्गे निरर्गलं निशीथसमये समेत्य सर्वैरस्मद्वर्ग्यैरुपाचरद्भिर्विपेवरवर्णिकामन्तःपुरासन्नतरवर्त्मनि प्रतिपालयितव्यस्तावदवसरः । त्वयापि खल्वधिरोहिणीं सौधशिखरात् प्रलम्बीकृतामेतामवलम्ब्य ते यथासुखं शुद्धान्तं प्रविशन्तः सन्तोषदं दशाननस्य चोरिकयाक्षेपणं कृपणाया वैदेह्या विधास्यन्तीति ।

सीता । (५२) (सत्रासकम्पम् ।) सहि ! सुणिदे ! इमिणा वुत्त-

(५२) सीता । सखि ! सुकृते ! अनेन वृत्तान्तेनाकम्पितं मे हृदयम् । तद्वद माम् ।

ऽत्तेण आकम्पिदं मे हिअग्रं ता धरेहि मं। (इति तस्या अङ्गे स्वाङ्गं तिर्यगारोपयति।)

सूनृता। (५३) सन्तं पावं। पड़िहदं अमङ्गलं। (बाहुना तामावेष्ट्य। (स्वगतम्।) हन्त पविणो पि णाम कोणव-कुलवई।

कधं रामस्स महिलं मोहा मोसिउमिच्छइ।
जीहं विअ मइंदस्स जम्भमाणस्स जम्बुओ॥

सीता। (५४ सहि! ण क्खु अहं अत्तणो भाअधेआइं विस्समेमि।

रामः। प्रिये! अलमावेगेन। अतीतं नामैतत्! (पुरुषं प्रति।) ततस्ततः।

पुरुषः। (दीर्घं निःश्वस्य।) अथ पित्रैवमुपदिष्टोऽप्यहं दुरदृष्टविजृम्भणेनैवात्मनः खल्वसम्भावनीयेऽस्मिन्नश्मसमय-मंजूषापुटके दृढ़तरं निरुद्धोऽस्मि तावत्। तदत्र तत्र-भवानेव प्रमाणम्। (यन्त्राणि रज्जुमयीमधिरोहिणीञ्च

---

(५३) सूनृता। शान्तं पापं। प्रतिहतममङ्गलम्। हन्त प्रवीणोऽपि नाम कौणपकुलपतिः,

कथं रामस्य महिलां मोहान्मोषितुमिच्छति।
जिह्वामिव मृगेन्द्रस्य जृम्भमाणस्य जम्बुकः॥

(५४) सीता। न खल्वहमात्मना भागधेयानि विश्वसिमि।

पुरतो न्यस्य पादेनैकेन स्थित्वा । बद्धाञ्जलिः । )
इदानीमस्मि ते शरणं गतः ।

द्विषन्तमपि न द्वेष्टि सज्जनः शरणागतम् ।
तमोहापि स्वयं दीपो न हन्ति स्वाश्रितं तमः ॥

( इति कराभ्यां चक्षुषी परिमृज्य सशब्दं क्रन्दति । )

रामः । (विभाव्य । स्वगतम् ।) हन्त ईदृशोऽयमायातः खलु करुणाक्रोधसंवेगः । ( विचिन्त्य । ) आस्तां तावदधुना । प्रतिपाल्यावसरोऽयं विषयः । ( प्रतीहारीं प्रति । प्रकाशम् ।) चतुरिके ! श्वः किलापराह्णवेलायां वटुरसौ त्वया पुनः सन्निधापनीयः । साम्प्रतं सम्यगेनमवेक्षस्व । ( इत्यसिमपि प्रत्यर्पयति । )

प्रतीहारी । (५५) ( ससम्भ्रममसिमादाय । ) यधा आणा ।

सीता । (५६) (सकरुणम् ।) अज्जउत्त ! अअं हि भुक्खाए भुइट्ठं किलिट्ठो दाव विप्पवड्ुओ । ता दाणिं इमस्स दुव्विणीदस्स वि अरुहदि क्खु सिणाणपाणादिअं परिकप्पिदुं ।

रामः । (आत्मगतम् । ) अये किमियं भगवती करुणेव

---

(५५) प्रतीहारी । यथाज्ञा ।

(५६) सीता । आर्यपुत्र ! अयं हि क्षुधया भूयिष्ठं क्लिष्टस्तावद्विप्रवटुः । तदिदानीमस्य दुर्विनीतस्याप्यर्हति खलु स्नानपानादिकं परिकल्पयितुम् ।

न्तेण आकम्पिदं मे हिअअं ता धरेहि मं । (इति तस्या अङ्गे स्वाङ्गं तिर्यगारोपयति ।)

सूनृता । (५३) सन्तं पावं । पड़िहदं अमङ्गलं । (बाहुना तामावेष्ट्य । (स्वगतम् ।) हन्त पविणो पि णाम कोणव-कुलवई ।

कधं रामस्स महिलं मोहा मोसिउमिच्छइ ।
जीहं विअ मइंदस्स जम्भमाणस्स जम्बुओ ॥

सीता । (५४ सहि ! ण क्खु अहं अत्तणो भाअधेआइं विस्समेमि ।

रामः । प्रिये ! अलमावेगेन । अतीतं नामैतत् ! ( पुरुषं प्रति । ) ततस्ततः ।

पुरुषः । ( दीर्घं निःश्वस्य । ) अथ पित्रैवमुपदिष्टोऽप्यहं दुरदृष्टविजृम्भणेनैवात्मनः खल्वसम्भावनीयेऽस्मिन्नश्ममय-मंजूषापुटके दृढ़तरं निरुद्धोऽस्मि तावत् । तदत्र तत्र-भवानेव प्रमाणम् । ( यन्त्राणि रज्जुमयीमधिरोहिणीञ्च

(५३) सूनृता । शान्तं पापं । प्रतिहतममङ्गलम् । हन्त प्रवीणोऽपि नाम कौणपकुलपतिः,

कथ रामस्य महिलां मोहान्मोषितुमिच्छति ।
जिह्वामिव मृगेन्द्रस्य जृम्भमाणस्य जम्बुकः ॥

(५४) सीता । न खल्वहमात्मना भागधेयानि विश्वसिमि ।

पुरतो न्यस्य पादेनैकेन स्थित्वा । बद्धाञ्जलिः । )
इदानीमस्मि ते शरणं गतः ।

द्विषन्तमपि न द्वेष्टि सज्जनः शरणागतम् ।
तमोहापि स्वयं दीपो न हन्ति स्वाश्रितं तमः ॥

( इति कराभ्यां चक्षुषी परिमृज्य सशब्दं क्रन्दति । )

रामः । (विभाव्य । स्वगतम् ।) हन्त ईदृशोऽयमायातः खलु करुणाक्रोधसंवेगः । ( विचिन्त्य । ) आस्तां तावदधुना । प्रतिपाल्यावसरोऽयं विषयः । ( प्रतीहारीं प्रति । प्रकाशम ।) चतुरिके ! श्वः किलापराह्णवेलायां वटुरसौ त्वया पुनः सन्निधापनीयः । साम्प्रतं सम्यगेनमवेक्षस्व । ( इत्यसिमपि प्रत्यर्पयति । )

प्रतीहारी । (५५) ( ससम्भ्रममसिमादाय । ) यधा आणा ।

सीता । (५६) (सकरुणम् ।) अज्जउत्त ! अअं हि भुक्खाए भुइट्ठं किलिट्ठो दाव विप्पवडुओ । ता दाणिं इमस्स दुव्विणीदस्स वि अरुहदि क्खु सिणाणपाणादिअं परिकप्पिदुं ।

रामः । (आत्मगतम् । ) अये किमियं भगवती करुणेव

(५५) प्रतीहारी । यथाज्ञा ।

(५६) सीता । आर्यपुत्र ! अयं हि क्षुधया भूयिष्ठं क्लिष्टस्तावद्विप्रवटुः तदिदानीमस्य दुर्विनीतस्याप्यर्हति खलु स्नानपानादिकं परिकल्पयितुम् ।

जानकीरूपेणावतीर्णा । ( सस्मितं प्रकाशम् । ) तथैवास्तु । यथादिशति खलु विदेहराजनन्दिनी ।

प्रतीहारी । (५७) अले वडुआ पुंडे । (इति तमग्रतो विधाय निष्क्रान्ता । )

सीता । (५८) (ससन्तोषं सखीमुखं पश्यन्ती ।) हला तत्थभोदो बुद्धिसेणा अज्ज वि कहं ण आअच्छेदि ।

सूनृता । (५९) सम्भावेमि सा क्खु दाणिं पट्टाभिसेअमण्डवे सह अम्माहिं जोदुअदाणत्थं तुम्हे पडिक्खदि ।

सीता । (६०) (रामं प्रति । सप्रणयम् ।) ता अणुआणादु तुरिदगमणस्स ।

रामः । अपि सम्भावनमर्हन्ति पवित्रदर्शनास्ताः । विशेषतस्तावदामन्त्रणीयास्माभिस्तत्रभवती योगिनी बुद्धिषेणा । अस्ति ह्यस्मासु तस्याः पक्षपातः । ( इति सीतारामौ निष्क्रान्तौ सूनृता च । )

इति सीताहरणप्रसङ्गो नाम पञ्चमोऽङ्कः ।

(५७) प्रतीहारी । अरे वटक ! व्रज ।

(५८) सीता । हला तत्रभवती बुद्धिषेणाद्यापि कथं नागच्छति ।

(५९) सूनृता । सम्भावयामि सा खल्विदानीं पट्टाभिषेकमण्डपे सहाम्बाभिर्यौतुकदानाय युवां प्रतीक्षते ।

(६०) सीता । तदनुजानातु त्वरितगमनाय ।

( इति पञ्चमोऽङ्कः । )

# षष्ठोऽङ्कः।

( ततः प्रविशति सूनृता। )

सूनृता। (१) (दृष्ट्वा।) अए कणअमन्दिरं सुट्ठु सुसज्जिदं दाव एदं विणदाए। (उपविश्य। चिन्तां नाटयित्वा। सोल्लासम्।) अम्महे। दिट्ठिआ वड्ढामि। पिअवहिणी मे जाणई अणुरूवं भत्तारं पत्ता। तेण अज्ज सव्वधा जेव्व किदकिच्च म्हि संवुत्ता। जाणे अहुणा मुद्धादो मे ओदारिदो विअ महन्तो बोज्झओ दाव।

( ततः प्रविशति पुष्पाभरणा विषण्णा सीता। )

सूनृता। (२) ( निरूप्य। ) कधं ईरिसे वि उस्सवदिणे रणरणउप्पाओ जाणइन्दुकलं अक्कन्देदि। ( सस्नेहम्। ) पिअसहि! वइदेहि! कुदो क्खु एव्वं। ( इति तामङ्के समारोप्य चुम्बति। )

सीता। (३) सहि! सुणिदे! दाणिं पुणो वि दुउणुव्वेएण

(१) सूनृता। अये कनकमन्दिरं सुष्ठु सुसज्जितं तावदेतद्विजनतया। अम्महे दिष्ट्या वर्धे। प्रियभगिनी मे जानक्यनुरूपं भर्तारं प्राप्ता। तेनाद्य सर्वथैव कृतकृत्यास्मि संवृत्ता। जाने। अधुना मूर्ध्नो मेऽवतारित इव महान् भारस्तावत्।

(२) सूनृता। कथमीदृशेऽप्युत्सवदिने रणरणकोत्पातो जानकीन्दुकलामास्कन्दति। प्रियसखि! वैदेहि! कुतः खल्वेवम्।

(३) सीता। सखि! सूनृते! इदानीं पुनरपि द्विगुणोद्वेगेनाधिकतरं व्याकुलीभूतास्मि। न खलु मम पाणिपादं प्रक्रामति।

अहिअदरं वाउलीभूद म्हि। ण हु मज्झ पाणिपाआ पक्कमन्ति।

सूनृता। (४) (आश्वास्य।) सन्तं पावं। सहि! सिणेहो क्खु सिणिद्धजणस्स असण्णिहाणदुक्खं खणमेत्तं मि ण सहेदि। णं सिग्घं उण आआदि दे वल्लहो।

सीता। (५) (उत्कण्ठामभिनीय।) हला जाणे। सणेह-पउत्तो एवंदंसिणि त्ति। ण क्खु अज्जउत्तस्स किदे एवं। अत्थि पुणो एत्थ अवरं वि कारणं।

सूनृता। (६) (सोद्वेगम्।) केरिसं कारणं।

सीता। (७) पच्चादे दुस्सिविणअदंसणं।

सूनृता। (८) सन्तं पावं। पड़िहदं अमङ्गलं। (सौत्सुक्यम्।) सहि! वण्णेहि सिविणअं।

सीता। (९) (निःश्वस्य।) हला सुणाहि। एरिसं क्खु।

(४) सूनृता। शान्तं पापम्। प्रियसखि! स्नेहः खलु स्निग्धजनस्यासन्निधानदुःखं क्षणमात्रमपि न सहते। ननु शीघ्रं पुनरायास्यति ते वल्लभः।

(५) सीता। हला जाने स्नेहप्रवृत्तिरेवंदर्शिनीति। न खल्वार्यपुत्रस्य कृत एवम्। अस्ति पुनरत्रापरमपि कारणम्।

(६) सूनृता। कीदृशं कारणम्।

(७) सीता। प्रभाते दुःस्वप्नदर्शनम्।

(८) सूनृता। शान्तं पापम्। प्रतिहतममङ्गलम्। सखि! वर्णय स्वप्नम्।

(९) सीता। हला शृणु। ईदृशं खलु।

सूनृता। (१०) अवहिद म्हि।

सीता। (११) तुमं दाव कहिं वि महापुरिसे संजादराआ सि। तुए क्खु कामं अणाविक्किदे वि भावे सो महाणुभाओ केण वि तित्थेण मणोरहं दे हन्त उअअन्तो एव्व खणं समुस्सुओ आसि। किंदु पढमं रमणीमणिम्मि अणस्सिं अप्पिदहिअओ त्ति ताए सहं णिवुत्तपरिणओ हि एसो एक्कवत्तीवदं बहु मण्णमाणो एवमणुवमरूवगुणलाअस्सं वि तुमं हिअअदाणेण ण क्खु अत्त-लच्छिं कादुं पभवेदि।

सूनृता। (१२) (स्वगतम्।) अपि कधं विअ एव्वं उप्पेक्खिदं सीदाए। (सविमर्शम्।) किंवा सिविणओ जेव्व।

सीता। (१३) (विभाव्य।) सच्चं। ण क्खु इह सव्वे वि सुपुरिसाओ अणेक्कवल्लहा होन्ति। तह हि।

(१०) सूनृता। अवहितास्मि।

(११) सीता। त्वं तावत् कस्मिन्नपि महापुरुषे सञ्जातरागासि। त्वया खलु काममनाविष्कृतेऽपि भावे स महानुभावः केनापि तीर्थेन मनोरथं ते हन्तोपनयन्नेव क्षणं समुत्सुक आसीत्। किन्तु प्रथम रमणीमणावन्यस्मिन्नर्पितहृदय इति तया सार्धं निर्वृत्तपरिणयो ह्येष एकपत्नीव्रतं बहुमन्यमान एवमनुपमरूपगुणलावण्यामपि त्वां हृदयदानेन न खल्वात्मलक्ष्मीं कर्तुं प्रभवति।

(१२) सूनृता। ननु कथमिवैतदुत्प्रेक्षितं सीतया। किंवा स्वप्न एव।

(१३) सीता। सत्यम्। न खल्विह सर्वेऽपि सुपुरुषा अनेकवल्लभा भवन्ति। तथा हि।

णिसा-जुण्हा-कुमुद्दणी-ताराओ विहुणो पिआ।
मेहस्स उ पिआ विज्जू एक्का एव्व चिरं पुणो॥

एवं जाव तुमं अपुस्समणोरहा सव्वहा णिरासा भविअ भारं विअ दद्धजीविदं विसज्जेदुं किदणिच्चआ। (इत्यधोंक्ते सखीं कण्ठे गृहीत्वा निष्पन्देव तन्मुखं पश्यति।)

सूनृता। (१४) (निःश्वस्य। स्वगतम्।) दाणिं उव्भिस्सो मे अंसुपूरो ण सक्कं झत्ति णिवत्तेदुं। (प्रवर्तमानमप्यस्रं कथञ्चिन्निरुध्य। प्रकाशम्।) पिअसहि! वड्ढेहि! कहेहि जाव परिसेसं।

सीता। (१५) हन्त जलरासिं पविट्टे त्ति। (इति रोदिति।)

सूनृता। (१६) (आत्मगतम्।) किंवा दाणिं एत्थ पड़िवज्जिस्सं। (विमृश्य।) होदु। सविणअसेसं उद्दिसिअ कहइस्सं। (सावहित्थं प्रकाशम्।) सहि! मा रुवसु।

णिशा-ज्योत्स्ना कुमुदिनी तारा विधोः प्रियाः।
मेघस्य तु प्रिया विद्युदेकैव चिरं पुनः॥

एवं यावत्त्वमपूर्णमनोरथा सर्वथैव निराशा भूत्वा भारमिव दग्धजीवितं विसर्जयितुं कृतनिश्चया।

(१४) सूनृता। इदानीमुद्भिन्नो मेऽश्रुपूरो न शक्यं झटिति निवर्तयितुम्। प्रियसखि! कथय यावत् परिशेषम्।

(१५) सीता। हन्त जलराशिं प्रविष्टेति।

(१६) सूनृता। किंवेदानीमत्र प्रतिपत्स्ये। भवतु। स्वप्नशेषमुद्दिश्य कथयामि। सखि! मा रोदीः। मोञ्च बाष्पम्। पत्नीकः खल्वेष स्वप्नः।

पुसस्तु बाहं । अलिश्रो क्खु एरिसो सिविणश्रो । (इति स्वीयाञ्चलेन सीतायाश्चक्षुषी परिशोधयन्ती । अन्यचित्तेवात्मगतम् ।)

णाह ! सि जइ वि विराश्रो
तह वि तुए मज्झ रञ्जिश्रं हिश्रश्रं ।
हिश्रए वि रात्रपुव्वे
चिरस्स णिहिश्रो ण रत्तो सि ॥

(क्षणं विचिन्त्य । सविवेकम् । हद्धी । हद्धी । सुणिदे ! अविस्सासिणि ! किं णाम एसो सव्भावसिणेहसरिच्छो दे आरम्भो । णं एरिसो णिसंसदरो अज्झवसाश्रो तुज्झ क्खु अरिहो दाव ।

सीता । (१०) (विमृश्य । स्वगतम् ।) जुज्जदि । इदरा कहं णु विसमसरसरप्पहारेण वि अक्खदं विश्र से सरीरं । (प्रकाशम् ।) सन्तं पावं । पडिहदं अमङ्गलम् । (कर्णं दत्त्वा ।) कहं पश्रसद्दो विश्र ।

---

नाथासि यद्यपि विरागस्तथापि त्वया मम रञ्जितं हृदयम् ।
हृदयेऽपि रागपूर्वे चिरस्य निहितो न रक्तोऽसि ॥

हा धिक् हा धिक् । सुमते ! अविश्वासिनि ! किंनामैष सद्भावस्नेहसदृशस्त आरम्भः । नन्वीदृशो नृशंसतरोऽध्यवसायस्तव अलङ्कतावत् ।

(१०) सीता । युज्यते । इतरथा कथं नु विषमशरशरप्रहारेणाप्यक्षतमिवास्याः शरीरम् । शान्तं पापं । प्रतिहतममङ्गलम् । कथं पदशब्द इव ।

सूनृता । (१८) (नेपथ्याभिमुखमवलोक्य ।) सहि ! पेक्ख । एसो पुण्णिमाचन्दो विम माइन्ददिसाए उग्गच्छेदि दे दइदो ।

( ततः प्रविशति रामः । उभे ससम्भ्रममुत्तिष्ठतः । )

सीता । (१९) अज्जउत्त ! एदं कणअपलङ्कमलंकरेदु ।

रामः । (सीतां निरूप्य ।) ननु सुकुमारस्याङ्गस्य सुषमाक्रान्तं कुसुमनेपथ्यमेव पर्याप्तम् । ( उपविश्य नाटयेन पार्श्वे तामुपवेश्य करकिसलयं स्पृष्ट्वा च । ) अयि मैथिलि ! कथमद्यापि न प्रसीदसि ।

विदग्धे ! कुत एवेतन्मुग्धत्वमवलम्ब्यते ।
युष्मत्प्रयोग एवासौ मदर्थमनुरुद्ध्यताम् ।

सूनृता । (२०) ( स्वगतम् । ) अलं अदो वरं एत्थ चिट्ठिअ । ( प्रकाशम् । ) अहं विड़िआणअणत्थं गच्छिस्सं ।

सीता । (२१) अलं गदुअ । विणदा आणेदि । (स्वगतम् ।) ता पुणो पुणो वि अज्जउत्तेण एवं णिव्वन्धिज्जमाणा

---

(१८) सूनृता । सखि ! पश्य । एष पूर्णिमाचन्द्र इव माहेन्द्रदिशाया उद्गच्छति ते दयितः ।

(१९) सीता । आर्यपुत्र ! एतं कनकपर्यङ्कमलङ्करोतु ।

(२०) सूनृता । अलमतः परमिह स्थित्वा । अहं वीटिकानयनार्थं गच्छामि ।

(२१) सीता । अलं गत्वा । विनतानयति । तत् पुनः पुनरपि आर्यपुत्रेणैवं निर्बध्यमाना लज्जितुमपि लज्जे । सखि ! सूनृते ! इह तावत् प्रष्टव्यासि ।

लज्जिदुं वि लज्जेमि । (प्रकाशम् ।) सहि ! सुणिदे ! इह दाव पुच्छिदव्वा सि ।

सूनृता । (२२) किं दाव ।

सीता । (२३) णं पढमपुरिसे पुरिसुत्तमे वा मज्झमपुरिसीअ-पअप्पओओ सङ्गच्छेदि ण वेत्ति ।

सूनृता । (२४) जंपि अहिरुच्चदि पिअसहीए । सुणिज्जइ वच्छाअणमदेण तत्थ पओओ क्खु एमो साहु त्ति । (प्रविश्य । विनता जनककन्यकायाः कराम्बुजे ताम्बूल-मुपनयति । सा च सानुरागं भानुकुलकुमारस्यार्पयति । स खलु सादरं दरस्मितपूर्वं तदाददाते । विनता चामरं वीजयति । )

सूनृता । (२५) पिअवहिणि ! विणदे ! ण हु आणी किंणिमित्तं महादेईए दुवे वि अम्हे आहूदाओ दाव । ता एहि (इति मन्दस्मितं सीतामालक्ष्य विनतया सह निष्क्रान्ता।)

---

(२२) सूनृता । किं तावत् ।

(२३) सीता । ननु प्रथमपुरुषे पुरुषोत्तमे वा मध्यमपुरुषीयपदप्रयोगः संगच्छते न वेति ।

(२४) सूनृता । यदप्यभिरोचते प्रियसख्यै । श्रूयते वात्स्यायनमतेन तत्र प्रयोगः खल्वेष साधुरिति ।

(२५) सूनृता । प्रियभगिनि ! विनते ! न खलु जाने किंनिमित्तं महादेव्या द्वे अपि आवामाहूते तावत् । तदेहि ।

सीता। (२६) (नासाभरणस्खलनं सूचयित्वा।) पाणेसर! एदं पुणो वि आमुञ्चावेहि।

राम:। (स्मितं विधाय तथा कृत्वा।)

सुतनु! त्वदीयमास्यं
चञ्चन्नासाग्रमौक्तिकद्युतिभिः।
आलक्षितबुधयोगं
शशाङ्कबिम्बं विडम्बयति॥

(साभिलाषं सीतायाः करकमलं स्ववक्षसि निधाय।) अयि प्रिये! प्रियवादिनि! दिष्ट्या धन्योऽस्मि यस्यासि देवयजनसम्भवा मे सहधर्मिणी। अपि च। त्वमेव खलु

कीर्तिर्लोके गृहे लक्ष्मीश्चक्षुष्यमृतवर्तिका।
मन्ये प्रीतिश्च शान्तिश्च संविच्च हृदये मम॥

(पुलकं रूपयन्।) अहो नु खलु स्पर्शः। हन्त भोः किमेषः।

आनन्दनं मोहनञ्च स्नेहनं परितर्पणम्।
विकारमप्यन्यविधं सञ्चारयति मे हृदि॥

(विचिन्त्य।) शङ्के यावदियं सुधामयी निर्मितिः। कुतः।

सुधा स्पर्शे सुधापाङ्गे सुधा वाक्ये सुधाधरे।
सुधा चालिङ्गने यस्याः सुधायाः सृष्टिरेव सा॥

---

(२६) सीता। प्राणेश्वर! एतत् पुनरप्यामोचय।

( सोच्छ्वासम् । ) सम्भावयामि सीतामयं रामस्य कृते विज्ञानमेकमेव प्रजापतेः ।

सीता । (२०) (सहर्षलज्जमिवात्मगतम् ।) ण केवलं दंसणं से महुरं वअणं वि । अहवा किं चित्तं पाड़लकुसुमादो सुरहिगन्धुग्गारो त्ति ।

( आकाशे । )

भो भोस्तपस्विनः ! सन्निहितास्तिष्ठत । अद्यापि पर्य्यवस्तभ्यते नाम धर्मारण्यमिदं मृगयाविलासिभिः पंक्तिरथस्कन्धावारप्रवीरैः । तथा हि ।

पर्य्यन्तेष्वभितो निरन्तररथश्रेणीध्वजालोकनात्
संक्षुभ्यन्महिषीविषाणशिखराक्षेपास्तृतप्रस्तरम् ।
उद्भ्रान्तद्रुतविद्रवद्वनगजग्रामोपमर्दार्दित-
द्राघिष्ठद्रुमदीर्णदारुणमहीपृष्ठं वनं लक्ष्यते ॥

रामः । (निशम्य । संक्षुब्ध इव ।) आः कथं नु खलु तपोवनमुपरुन्धन्ति यावदस्माकमनुयात्रिकाः । ( सीतां प्रति ।) प्रिये वैदेहि ! साम्प्रतं तन्निषेधाय शिविरमेव साधयामि ।

(२०) सीता । न केवलं दर्शनमस्य मधुरं वचनमपि । अथवा किं चित्रं पाटलकुसुमात् सुरभिगन्धोद्गार इति ।

सीता । (२८) अहं पुणो सहीजणं अणुमाणइस्सं ।

( इति रामेण सह निष्क्रान्ता । )

( ततः प्रविशति सीता सूनृता च । )

सूनृता । (२९) सहि । इह जेव्व णिबिड़णिबिड़सद्दलत्थलीए उववििसअ आअमणं कुमारअस्स पड़िवालेमो ।

सीता । एवं । ( इत्युभे तथा कुरुतः । )

( प्रविश्य । सचिन्तो )

रामः । ( स्फाटिकवेदिकामधिष्ठाय । ) हन्त सुतरामाकुलीभूतोऽस्मि प्रतिकूलं ममाचरतस्तस्य विप्रवटोः कृते । किमत्र करणीयमिति न तावदधिगच्छामि ।

( नेपथ्ये । )

(३०) इदो इदो वडुए । एअं य्येव बउलविहिदुआले ।

रामः । ( विलोक्य । ) अयं प्रतीहार्यानुगम्यमानः प्रखरमतिरसौ परापतति ।

सीता । (३१) हला सुणिदे ! अज्जउत्तेण भुइट्ठं उक्कण्ठाविसं-

---

(२८) सीता । अहं पुनः सखीजनमनुमानयिष्ये ।

(२९) सूनृता । सखि ! इहैव निबिड़निबिड़शाद्वलस्थल्यामुपविश्यागमनं कुमारस्य प्रतिपालयावः ।

(३०) इत इतो वटुकः । एतदेव बकुलवीथीद्वारम् ।

(३१) सीता । हला सूनृते ! आर्यपुत्रेण भूयिष्ठमुत्कण्ठाविसंस्थुलचित्ततया न खलु लक्षिते आवाम् ।

दुलचित्तदाए ण क्खु लक्खिदा वअं। (इत्युभे राम-स्यान्तिकमुपेत्य तिष्ठतः।)

(प्रतीहार्या सह प्रविश्य।)

प्रखरमतिः। (सदैन्यसम्भ्रमम्) विजयतां देवः। (इत्यग्रतो बद्धाञ्जलिः स्थितः। प्रतीहारी प्रणम्य निष्क्रान्ता।)

रामः। (तिर्यग्वलितकन्धरं विलोक्य। ससमादरम्।) अये सह सहचर्या प्राप्तेयं मे प्राणेश्वरी। (मृदुस्मितेन ते उभे सम्भाव्य। स्वगतम्।) स्थाने खलु वटुना शतानन्दस्य भगवतो विद्यार्थित्वमभ्युपगतम्। (सवितर्कम्।) तदस्य प्रशासने तत्रभवानाङ्गिरस एव प्रभवति। (जिज्ञासुरिव ससखीं सीतामुद्दिश्य। प्रकाशम्।) प्रिये! सर्वसहानन्दिनि! एष खलु भगवद्गौतमस्य शिष्यो विहित-विप्रतीसारो विप्रवटुरिति नितरां विप्रियकृदपि सकृदेव क्षमामधिगन्तुमर्हति।

सीता। (१२) (सहर्षम्।) एदं सरिसमेव्व अज्जउत्तस्स। कुदो।

ण पेक्खइ कडक्खेण सीहो ससअसावअं।
ण वाक्कामइ पक्खिन्दो कुद्धो भुण्डुहडिम्भअं॥

(१२) सीता। एतत् सदृशमेवार्यपुत्रस्य। कुतः।

न प्रेक्षते कटाक्षेण सिंहः शशकशावकम्।
न वाक्रामति पक्षीन्द्रः क्रुद्धो डुण्डुभडिम्भकम्।

जाणे क्खु एदं अस्सदरं दाव अज्जउत्तकित्तिकन्दलीए उप्पत्तिखेत्तं ।

सूनृता । (२२) अज्जेण जुज्जन्तं आदिसीअदि ।

पङ्गपक्खवाएण ण क्खु वेवइ भूहरो ।
णोव्वेल्लेइ पओरासी सासेण सिसुअस्स वा ॥

प्रखरमतिः । ( स्वगतम् । ) हन्त हन्त प्रत्युज्जीवितोऽस्मि । कथमेवंगतस्यापि मम भागधेयपरावृत्तिः । ( सहर्षविस्मयम् । ) अहो दुरवगाहगम्भीरकरुणस्वभावानि महात्मनां चरितानि । ( प्रकाशम् । गद्गदस्वरम् । ) विजयतां वैकर्तनकुलकुमारः । (इत्यश्रूणि विहरति ।)

रामः । ( चिन्तामभिनीय । स्वगतम् । ) अलं पुनरातताथिनस्तावन्निरङ्कुशानुक्रोशविश्राणनेन । ( प्रकाशं सूनृतां प्रति । ) सखि ! तथाप्येवमविनयकारीति चपलोऽयं वटुर्निरुध्यताम् । अथ खलु

उपाध्यायस्य वृत्तान्तो विदितोऽयं यथा भवेत् ।
तत् कर्तव्यं त्वयावश्यं प्रापय्यैनं तदाश्रमम् ॥

---

जाने खल्वेतदन्यतरं तावदार्यपुत्रकीर्तिकन्दल्या उत्पत्तिक्षेत्रम् ।

(२२) सूनृता । आर्येण युक्तमादिश्यते ।

पतङ्गपक्षवातेन न खलु वेपते भूधरः ।
नोद्वेलति पयोराशिः श्वासेन शिशुकस्य वा ॥

सूनृता । (२४) जधा आणत्ती महाभाअस्स ।

( प्रखरमतिराश्वस्य सकरुणं सीतामुखमुदीक्षते । )

सीता । (२५) (निरूप्य । रामं प्रति ।) पुणो वि वत्तुकामो विअ फुरिदाहरो क्खु एसो ।

रामः । ( वटुं प्रति । ) अस्ति खलु चेत् परिशेषय याव-द्विवक्षितम् ।

प्रखरमतिः । ( निःश्वस्य । कामयमानावस्थां नाटयित्वा । ) महाभाग ! एकदा किल मुनेर्याज्ञवल्क्यस्य कुलपतेरनु-कौशिकीतीरं कीरकुलसमुदीरिताम्नायरहस्यं प्रविश्या-श्रमपदं यजुःपदपाठं श्रोतुकामेन मया समया भगवतीं मैत्रेयीं तत्र धरित्रीसुतया सह सहचरीयं सूनृता पञ्चशरराज्यसौभाग्यदेवतेव परिणताकारा पर्यलक्ष्यत । तत्र भूयः पर्यवेक्ष्य पुनः परामृश्य च ।

अनुमानप्रवीणेन धूमादग्निरिव स्फुटम् ।
अपाङ्गदर्शनाल्लिङ्गात् तस्या रागोऽन्वमीयत ॥

( सूनृतां प्रति । सदृष्टिक्षेपम् । ) अथ

विभ्रमारम्भवलितैर्विलासललितायतैः ।
खञ्जरीटघटां दिक्षु कटाक्षैर्वितताम या ॥

(२४) सूनृता । यथाज्ञप्तिर्महाभागस्य ।

(२५) सीता । पुनरपि वक्तुकाम इव स्फुरिताधरः खल्वेषः ।

तामिमां निर्निमेषेण चक्षुषा निर्वर्ण्य वर्णिव्रतिकोऽपि कन्दर्पहतकेन तद्व्रतभङ्गमङ्गीकार्य स्वकार्यात् प्रच्यावितः खल्वहम्

सपद्यस्या गुणच्छिन्नपुष्पेषुबडिशेन मे।
हृते हन्त मनोमीने शून्यो ह्रद इवाभवम्॥

किञ्च। यथा प्रविश्य केदारं तदाकारं भवेत् पयः।
दृष्ट्वाभीष्टजनं चेतस्तथा तन्मयतां गतम्॥

किं बहुना। ततः प्रभृति निभृतं यावदेनां यत्नेनैव सङ्कल्पेन चित्तफलकोन्मीलितां विधाय ध्यायन्नपि स्वल्प-नधिगम्य समागमोपायं पातयन्नश्रुपूरं दुराशयैव हन्त सन्धार्य प्राणान् प्रवृत्तोऽस्मि कृच्छ्रेण दिनानि गमयितुम्।

सीता। (२६) (स्वगतम्। अम्मो। किं णाम चुअस्स किदे चन्दिमाए सिट्ठी। (इति नाट्येन सूनृतां पश्यति।)

(सूनृताप्यपाङ्गभङ्ग्या संज्ञया व्याहरति।)

प्रखरमतिः। (विभाव्य। सखेदम्) स्थाने खलु

काले फुल्ललतावलि-
मञ्जुलगुञ्जन्मधुव्रतव्राते।
आसीद्वालकलम्बी-
निकुरम्बं हन्त मे शयनम्॥

(२६) सीता। अम्मो। किं नाम चूतस्य कृते चन्द्रिकायाः सृष्टिः।

( उभे मन्दस्मितमन्योन्यमवलोकयतः )

रामः । अलं पल्लवितेन, संक्षिप्य ब्रूहि ।

प्रखरमतिः । ( कातर्यं रूपयन् ) समनन्तरञ्चाहं खल्व-
त्वरान्वरा समापतन्तीमाश्रमपदं नाम्ना नागरिकाम-
नुरुध्य चेटीं कष्टात् स्वाभीष्टजनस्य हस्ते मन्मथलेखमेकं
तस्या हस्तेन प्राहैषम् ।

सूनृता । (१७) (समुखभङ्गम् । स्वगतम् ।) अवेहि सहरवसह !
सिक्खइस्सं तुमं ।

सीता । (१८) (अपवार्य) अज्जउत्त ! पेक्ख दाणिं थुडु'किअं
सूणिदाए ।

प्रखरमतिः । (क्षणं तूष्णीम्भूय । रुद्धकण्ठमिव ।) अथ तेनापि
तत्राज्ञातार्थः स्वार्थान्धतयैवाहं सह सख्या सीताया हर-
णार्थं हन्त व्यसनव्यतिकरेऽपि खल्वीदृशे दग्धजीवितमेत-
दयपीपतं नाम । (इति सूनृतां विलोकयन् स्थितः ।)

रामः । (सानुग्रहम् ।) सत्यं खलु

क्रुद्धानां मदमत्तानां कामोपहतचेतसाम् ।
विलुप्यते प्रलुब्धानां हिताहितविमर्शनम् ॥

(१७) सूनृता । अपेहि सहरवसह । (धर्माय त्यक्तवृषभ !) । शिक्षयिष्यामि त्वाम् ।

(१८) सीता । आर्यपुत्र ! पश्येदानीं थुडु'क्रिय' ( दरकुपितवदनसङ्कोचनम् )
सूनृतायाः ।

सीता। (३९) (सकुतुकम्।) हला सुणिदे! णं उवलद्धो णु तुए मग्रणलेहो।

सूनृता। (४०) (स्मरणमभिनीय।) श्रां सुमरामि। एअदा किल णाग्ररिश्राए मग्रणलेहो ह्नि एक्को पाणिम्मि मज्झ पइत्तो आसि। ता अज्ज जाणामि सो क्खु केण दाव छइल्लेण पेल्लिदो त्ति।

सीता। (४१) अवि णाम अच्छदि सो लेहो।

सूनृता। (४२) लेहो क्खु मए वाग्रइश्र जेव्व तुरिश्रं टुड़िदो त्ति।

सीता। (४३) (साकूतम्।) सहि। सुमरसि केरिसो वा लेहो त्ति।

सूनृता। (४४) (चिन्तां नाटयित्वा।) सुमरामि क्खु अदिललिदपश्रबन्धणं तइश्रं छलिश्रमेक्कं।

---

(३९) सीता। हला सूनृते! ननु उपलब्धो नु त्वया मदनलेखः।

(४०) सूनृता। आं स्मरामि। एकदा किल नागरिकया मदनलेखो ह्येकः पाणौ मम प्रदत्त आसीत्। तदद्य जानामि स खलु केन तावद्विदग्धेन प्रेरित इति।

(४१) सीता। अपि नामास्ते स लेखः।

(४२) सूनृता। लेखः खलु मया वाचयित्वैव त्वरितं त्रुटित इति।

(४३) सीता। सखि! स्मरसि कीदृशो वा लेख इति।

(४४) सूनृता। स्मरामि खल्वतिललितपदबन्धनं त्वदीयं छलितमेकम्।

सीता । (४५) हला आअक्खसु ।

सूनृता । (४६) (सीतास्यदत्तदृष्टिः ।) एव्वं ।

> ब्रह्मचर्योपतप्तोऽहं त्वञ्च कुम्भनिभस्तनी ।
> भद्रे ! कुरुष्व मे तूर्णं स्मरराज्याभिषेचनम् ॥

( सीतारामौ क्षणमस्फुटस्मितमन्योन्यमवलोकयतः । )

सीता । (४७) (सोत्कण्ठम् ।) हला सुणिदे ! णं दाणिं वि तुमं अणिव्वुत्तपाणिग्गहणा सि । एसो वि विप्पवडुओ तुज्झ पणअमअतिण्हाए विप्पलम्भिदो णाम गिरिउहाए अणलुक्करं महन्तं उग्गिरन्तीए दिस्सभम्पो विअ एवं दाव संसअं आरोविदो वम्महहदएण । तेण हि अरुहसि क्खु अब्भुववत्तीए जीविदं इमस्स अवलम्बिदुं ।

सूनृता । (४८) ( सानुशयमिव निःश्वस्य । ) पिअं पिअसही मे उवदिसदि । अवि णाम

(४५) सीता । हला आचक्ष्व ।

(४६) सूनृता । एवम् ।

(४७) सीता । हला सूनृते ! नन्विदानीमपि अनिर्वृत्तपाणिग्रहणासि त्वम् । एषोऽपि विप्रबटुस्तव प्रणयमृगतृष्णया विप्रलब्धो नाम गिरिगुहायामनलोत्करं महान्तमुद्गिरन्त्यां दत्तझम्प इवैवं तावत् संशयमारोपितो मन्मथहतकेन । तेन अर्हसि खल्वभ्युपपत्त्या जीवितमस्यावलम्बितुम् ।

(४८) सूनृता । प्रियं प्रियसखी मे उपदिशति । अपि नाम

जं जं पुरा कअं मे
सोहग्गफलपड़िबन्धअं किंपि ।
तं तं इत्तिअकालं
परिणाममुहं धुअं आसि ॥

किंअ । ता अणड्ढो वि । ( संस्कृतेन । )

एष एव मया सेव्यो नाप्याढ्यो बहुवल्लभः ।
अपि क्षारोदधेः श्रेयः पल्वलं सुलभोदकम् ॥

ण क्खु गअणं चिरस्स मेहच्छस्सं होदि। अज्ज मे सुदिअहो। ( इति पदान्तरे स्थित्वा। सीतायाः कर्णमूले लगति । )

सीता । (४९) (अपवार्य ।) णाहं किम्पि जाणामि । (इत्थं-शुकेन वदनमावृत्य स्मयमाना विलोकयति ।)

सूनृता । (५०) ( रामं प्रति । बद्धाञ्जलिः । ) वअस्सेण एक्को अवराहो मे अणुअम्पिणा मरिसिदव्वो ।

रामः । (भावमुन्नीय ।) सखि ! कथं मामेवमुपच्छन्दयसि। इह खलु ते स्वातन्त्र्यमेव ।

यद्यत् पुरा कृतं मे सौभाग्यफलप्रतिबन्धकं किमपि ।
तत्तदेतावत्कालं परिणामसुखं ध्रुवमासीत् ॥

तदनाढ्योऽपि । न खलु गगनं चिरस्य मेघाच्छन्नं भवति । अद्य मे सुदिवसः ।

(४९) सीता । नाहं किमपि जानामि ।

(५०) सूनृता । वयस्येनैकोऽपराधो मेऽनुकम्पिना मर्षयितव्यः ।

प्रखरमतिः । (स्वगतम् ।) हन्त हन्त ममैव सूनृता भवेत् । तेन ह्यविलम्बं सम्भावयाम्येनाम् । (सहर्षमग्रतो गत्वा । प्रकाशम् ।) देहि पदपङ्कजम् । (इति सूनृतायाः पादयोः पतति ।)

सूनृता । (५१ (कूणिताक्षं सानुरागमिव ।) अम्महे । पेम्म-सव्वस्सणिस्सन्दो विअ इमस्स महुरालावो मज्झ कण्ण-रसाअणं होदि । उट्ठेसु वरइत्त ! उट्ठेसु । अलं । (इत्य-र्धांक्षि नाटेयन तत्पृष्ठे करतलमर्पयति । )

प्रखरमतिः । (आत्मगतम् ।) अहो सम्मोहनमन्त्राक्षराणि सुभाषितान्यमुष्याः । किञ्च ।

अर्धाक्षेण विलोकित-
मर्धाक्षरभणितमर्धपरिहसितम् ।
अर्धस्थितगतमस्या
न स्यादिह कस्य वश्याय ॥

(अश्रंसुखमभिनीय । सपुलकम् । प्रकाशम् । ) मम शिरसि भूषणम् । ( इति हर्षवैवश्यं रूपयति । )

सूनृता । (५२) ( करावलम्बनेनैनमुत्थाप्य । सावहित्थम् । )

(५१) सूनृता । उत्तिष्ठ अभिनववर ! उत्तिष्ठ । अलम् ।

(५२) सूनृता । का नाम भीतिस्त्वादृशस्य पाणौ कर्णधारस्य जीवनतरिं सम-र्पयितुम् ।

का णाम भीदी तुम्हारिसस्स पाणिम्मि कस्सहारस्स जीअणतरिं समप्पेदुं । ( कराभ्यां करयुगलमादाय । )

वरइत्त ! तुए सहं संवुत्तं पाणिपीड़णं ।
आआरादो करे तुज्झ बन्धिस्सं कङ्कणं उण ॥

एहि । सम्भावआमो पमोअं ।

सीता । (५२) (जनान्तिकम् ।) अज्जउत्त ! सहीए अवच्छुरणाइं सुणाहि । ता इमो क्खु अलिअविआहेण विड़म्बिदुं आरद्धो दाव ।

रामः । ( स्मितं विधाय । ) अयि सुभाषिणि ! एषा हि

परिहासरसात्मिका वक्रोक्तिं वक्ति ते सखी ।
प्रायो हि सुकवेरुक्तिर्व्यक्तं वक्रोक्तिभूषणा ॥

प्रखरमतिः । ( स्वगतम् ।) तत् किमिदानीमात्मानं पूर्णमनोरथं न प्रतीच्छामि । ( सहासं दशनपंक्तिं विकाश्य । प्रकाशम् । ) अलङ्घनीयः सर्वथा धर्माचारसमयः । शास्त्रेऽपि । "यस्मिन् देशे य आचारः पार-

अभिनववर ! त्वया सार्धं संवृत्तं पाणिपीड़नम् ।
आचारात् करे तव भन्त्स्यामि कङ्कणं पुनः ॥
एहि । सम्भावयावः प्रमोदम् ।

(५२) सीता । आर्यपुत्र ! सख्या अवच्छुरणानि ( क्रोधे सति भङ्गोदितानि ) शृणु । तदयं खल्वलीकविवाहेन विड़म्बयितुमारब्धस्तावत् ।

म्मयोत् प्रवर्तते"। (विस्मरणं नाटयित्वा।) अपराधं नायाति। (इति तया सह निष्क्रान्तः।)

रामः। अहो अपूर्वः खलु प्रकारः प्रहरतो मकरकेतनस्य।

सीता। (५४) (सव्यथम्। कुदो वा दाणिं वि बालिसस्स दुराहिरोहो से आसाणुबन्धो। (नेपथ्याभिमुखमवलोक्य।) अज्जउत्त! पेक्ख। इदो दाव रस्सिणा पाणीसु वडुअं आकड्ढिअ वेत्तहत्था मे पिअसही लहु लहु उवसप्पेदि।

रामः (निपुणं निरूप्य।) अये प्रखरमतेरपि तावत्।

एकः सुधाशुभ्रतरोऽस्य गण्डयो-
रन्योऽपि भिन्नाञ्जनपुञ्जरञ्जनः
रज्ज्वा च जुष्टं भुजयुग्ममादरा-
न्नवीनकौपीनधरस्य साम्प्रतम्॥

(स्वगतम्।) कथं वा बीभत्सतरमेवं विलोकयामि। (इति स्मयमानोऽपवारकेण गुल्मान्तरालं श्रयति।)

(प्रखरमतिना सह प्रविश्य।)

सूनृता। (५५) (सचापलम्।) सामिअ, पिअसहिं दे किंचिअं

(५४) सीता। कुतो वेदानीमपि बालिशस्य दुराधिरोहस्याशानुबन्धः। आर्यपुत्र! पश्य। इतस्तावद्रश्मिना पाण्योर्वटुकमाकृष्य वेत्रहस्ता मे प्रियसखी लघु लघूपसर्पति।

(५५) सूनृता। स्वामिन्! प्रियसखीं ते किञ्चिअं (एकपदगमनक्षोदां) समप्पिअं (उत्प्लुत्य गतं) च दर्शय।

संसप्पिअं च दंसेहि । (इति वेत्राघातेन कुट्टिमं मुखरीकरोति ।)

प्रखरमतिः । मञ्जुभाषिणि ! यथाज्ञापयसि । (तथा कृत्वा क्षणमाकाशे लक्ष्यं बद्धा च । हन्त हन्त,

(५६) णाइ णाइ वीसम्मइ लइ लइ घुम्मइ
पअ पअ ढुण्ढइ सव्व तरु ।
जइ जइ णरु पेच्छइ तइ तइ पुच्छइ
वण वण भम्मइ हा भमरु ॥
(इति सहस्ततालमुच्चैर्हसति ।)

सीता । (५७ हा विलंबो ।

रामः । (गुल्मान्तरालान्निष्क्रम्य सीतामुपगम्य वटुमुद्दिश्य च । सदयम् ।) हन्त हर्षातिशयादेव वराकोऽयमुन्मत्तः संवृत्तः ।

सूनृता । (५८) (निरूप्य । सानुरागमिव ।) हिअएसर ! कोदुअघरं पविसिदुं जुत्तो क्खु ओसरो । (इति परिक्रामति ।)

प्रखरमतिः । (हर्षात्फुल्लम् ।) यथा खलु ते मनोरथानुबन्धः । (इति तामनुगच्छति ।)

(५६) न हि न हि विश्राम्यति लतायां लतायां घूर्णते पदे पदे मृगयते सर्वेषु तरुषु । यदा यदा नरं पश्यति तदा तदा पृच्छति वने वने भ्राम्यति हा भ्रमरः ।॥

(५७) सीता । हा विडम्बना ।

(५८) सूनृता । हृदयेश्वर ! कौतुकगृहं प्रवेष्टुं युक्तः खल्ववसरः ।

सूनृता । (५९) इदो इदो वअस्स ! । ( परिक्रम्य मन्दुरामर्कटच्छद्मप्रविष्टमेनं विधाय । ससंरम्भम् ।) हदास ! दाणिं अणुहोहि दाव दुस्सअवइअरस्स अप्पणो पड़िवाअं । ( इति द्वारि तालकं ददाति । )

रामः । ( स्वगतम् । ) तदयमवसरः प्रीतिदायस्य । (सूनृतामुपसृत्य । सस्मितम् । प्रकाशम् । )

सखि ! ते लभतामेष हारो यौतुककैतवात् ।
वधूभावमुपेतायाः कण्ठालम्बनसौभगम् ॥

( इति स्वकण्ठतो हारमवतार्य ददाति । )

सूनृता । (६०) कृच्छ्रेणाकारगोपनं कृत्वा । ससम्भ्रमम् । ) धण्णम्हि संवुत्ता । (बाष्पबिन्दुमेकमलक्षितं पातयित्वा निःश्वस्य हारमादाय शिरसा संयोज्य च । णं छाआपहो णाम सरब्भ-णहत्थलिं उज्जलेदि दाव । अअं उण सरिसट्ठाणलम्भादो असोअणिज्जो होदु । (इति सीतायाः कण्ठे नाट्येन समर्पयति ।)

(५९) सूनृता । इत इतो वयस्य ! । हताश ! इदानीमनुभव तावद्दुर्नयव्यतिकरस्यात्मनः परिपाकम् ।

(६०) सूनृता । धन्यास्मि संवृत्ता । ननु छायापथो नाम शरन्नभःस्थलीमुज्ज्वलयति तावत् । अयं पुनः सदृशस्थानलाभादशोचनीयो भवतु ।

सीता। (६१) (सानन्दम्।) अवुव्वो क्खु सहीपसाओ।

(इति नाट्येन कण्ठे धारयति।)

(नेपथ्ये।)

शिव शिव। अये वीथिकाया अधस्तादच्चराण्यपि।

उच्चा भिक्षुरुपैति कींचवनितानिचोत्सवः संविदां
पायं पायमिति क्रुधा करतलोत्तालं हसत्युच्चकैः।
देवी देवमपृथ्ककेशरिभिया वाहाद्गतं विह्वलाद्-
गौरीशङ्करयोश्चिरं विजयतामित्थं मिथः कौतुकम्॥

हन्त पित्रोरपि जगतश्चरित्रमेवं चित्रयन्ति नाम।

राम:। (श्रुत्वा।) अये कोऽपि तावदसौ नीरन्ध्रनीरप्रदमन्द्रभारतोनिर्घोषः समुचितरुचिप्रवणतामात्मनः प्रकटयन् महामाहेश्वरतां प्रख्यापयति।

(पुनर्नेपथ्ये। शङ्खघण्टादिध्वनिः।)

सीता। (६२) (कर्णं दत्त्वा।) अज्जउत्त! सम्मिकिट्टो क्खु आरत्तिअमुहुत्तओ भअवदो गोरीसङ्करस्स। (इति सत्वरं परिक्रम्य निष्क्रान्ताः सर्वे।)

इत्यलीकविवाहो नाम षष्ठोऽङ्कः।

(६१) सीता। अपूर्वः खलु सखीप्रसादः।

(६२) सीता। आर्यपुत्र! सन्निकृष्टः खल्वारात्रिकमुहूर्तो भगवतो गौरीशङ्करस्य।

(इति षष्ठोऽङ्कः।)

# सप्तमोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः । अतिथिसत्क्रियार्थमादिष्टोऽस्मि भगवत्पादेन दैर्घतपसेन । तदद्य यथानिर्दिष्टमनुतिष्ठामि ।

( नेपथ्ये । ) अयमहं भोः ।

शिष्यः । ( श्रुत्वा । सदृष्टिक्षेपम् । ) अये

यद्दोर्दण्डखलीकृतस्त्रिभुवनख्यातैकदोर्विक्रमः

षड्वक्त्रो बहुवक्त्रनिर्मितिविधिं निन्दन् विधेरात्मना ।

पार्वत्याः पुरतो षडाननतया व्रीडावशादाननं

नस्त्रीकर्तुमशक्नुवन्नपि पुनः सम्मीलिताक्षोऽभवत् ॥

स खलु निखिलक्षत्रियवधप्रतिज्ञापारदृश्वा पारश्वधिको महामाहेश्वरो भगवान् भार्गवरामः खल्विहैवागच्छति ।

( ततः प्रविशति परशुपाणिर्भार्गवः । )

शिष्यः । ससम्भ्रममुपगम्य । स्वागतमतिथिप्रवरस्य । (इति सपाद्यमर्घ्यं प्रणम्य परस्परमुपचरतः । )

भार्गवः । वत्स ! अपि सन्निहितोऽत्र कुलपतिर्गौतमः ।

शिष्यः । ( सविनयमर्घ्यं विकीर्य । ) भगवन् ! तत्र-भवानिह मामतिथिसत्काराय नियुज्य महाराजजनकस्य राजधानीं गतः । तत् खल्वत्र ।

आपः स्वच्छाः शिशिरसुरभिस्वादवो निर्झराणां
धाराधातान्युलपपटलैः कोमलान्यासनानि ।
काले काले वनतरुफलं भुवि नैवारमन्नं
सत्कारोऽयं सततमतिथिप्रीतये कल्पितोऽस्ति ॥

भार्गवः । वत्स । सर्वमुपपन्नम् । रमणीयः खल्वयमाश्रमाभोगस्तपोवनस्य । किन्तु सुतरामाकुलीभूतोऽस्मि दर्भाङ्कुरकण्टकवेधबाधयेत्युपरमामि ।

शिष्यः । अहो नु खलु भगवतापि तारकेश्वरकिशोरशेखरशिष्येण कथमित्थं कथ्यते नाम ।

पृथ्वीपतिप्रकरमौलिकिरीटकोटि-
मृष्टेन्द्रनीलमणिसूचिमुखावघृष्टम् ।
आजन्मनश्चरणतामरसं त्वदीयं
माढुं न्वशिक्षत कुशाङ्कुरवेधबाधाम् ॥

भार्गवः । ( सोच्चैर्हासम् । ) शिव शिव । नन्वायुष्मान् खल्वापातप्रतीतमेवार्थं समधिगच्छति । ( सहसा रुषा प्रदीप्त इव । ) यत् सत्यम् ।

लघुरित्येष नोपेक्ष्यो डिम्भोऽपि राघवः पुनः ।
भस्माच्छन्नेऽप्यग्निकणे दाहिका शक्तिरस्ति सा ॥

शिष्यः । ( सभयमिव । स्वगतम् । ) अये प्रलयकालकराल-

कालानलज्वालावलीच्छटाजटालमिव वदनमण्डलमेतस्य संवृत्तम् । (इति निष्क्रान्तौ ।

( शुद्धविष्कम्भकः ।

(ततः प्रविशति स्फाटिकप्रासादस्थितो रामः सीता सूनृता च ।)

रामः । (दक्षिणाक्षिस्पन्दनं सूचयित्वा । स्वगतम् ।) न खलु जाने किं पुनरन्यदपि हर्षकारणमद्य ।

(नेपथ्ये ।) भो भोः शुद्धान्तपरिष्कन्नाः । विदाङ्कुर्वन्तु भवन्तः ।

तेजःस्तोमैरतर्क्याकृतिरपि तपितां दामभिः स्पर्धमाने-
र्दूराद्दृहीति कर्णात्कुटकरु विरटन श्राव्ययं दृष्टपूर्वः ।
क्वासौ रामाख्यडिम्भः पुनरपि जगति क्षात्रसञ्चारहेतुः
सोत्प्रासं सावलेपं स्फुटभिति निगरन् रेणुकेयोऽभ्युपैति ॥

( सीतासूनृते भीतिभीते इवाकर्णयतः । )

रामः । ( मधैर्यसम्भ्रमम् । ) अहो नु खलु भोः

पुरा किल पुरारातिः परशुं परसूदनम् ।
प्रियान्तेवासिने यस्मै प्रसादीकृतवान् मुदा ॥
दिष्ट्या सोऽयं महाबाहुर्नृणां हर्षवर्धनः ।
शौर्यतीर्थो महान् साधुः सन्निकृष्टतरः स्वयम् ॥

( सोल्लासम् । ) अपि नाम द्रष्टव्योऽद्य महामुनिर्भार्गवः ।
अहो सुदिवसः ।

सूनृता । (१) हन्त थरहरिअं मे हिअअं । एसो क्खु अकालपज्जस्सभीमो गाढ़ुक्कण्ठाविसओ दाव ।

सीता । (२) हला सुणिदे ! सण्णिहिदे क्खु अज्जउत्ते कुदो णाम उक्कण्ठावसरो ।

( पुनर्नेपथ्ये । )

भूपास्तिष्ठत मा पुनर्द्रवत भो भीताः कुतः स्फायते
द्राग्विद्रावितकुञ्जरेण हरिणा फेरुष्वदो दोर्बलम् ।
कालः प्राप्त इति प्रबुद्धमपि मां क्रोधादिवोद्बोधयन्
काकुत्स्थं कुलमुल्लुलूषतितरां क्रूरः कुठारोऽद्य मे ॥

रामः । ( श्रुत्वा । ) अहो सन्दीपनान्यक्षराणि । यत् सत्यम् ।
दीपः खलु निर्वाणोन्मुखः सुतरां प्रदीप्यते । किञ्च ।

आसन्ने हन्त जन्तूनां दुःसहव्यसनानले ।
प्रथमं मोहधूमेन कलुषीक्रियते मतिः ॥

( इत्यन्यचित्ततां नाटयन् विकटं परिक्रामति । )

सूनृता । (३) (स्वगतम् ।) एणिह्ं परिक्खिदव्वा महावीरवरवस्सिणी जाणई । ( जनान्तिकम् । ) सहि ! पेक्ख

(१) सूनृता । हन्त कम्पितं मे हृदयम् । एष खल्वकालपर्जन्यभीमो गाढोत्कण्ठाविषयस्तावत् ।

(२) सीता । हला सूनृते ! सन्निहिते खल्वार्यपुत्रे कुतो नामोत्कण्ठावसरः ।

(३) सूनृता । इदानीं परीक्षितव्या महावीरवरवर्षिणी जानकी । सखि ! पश्य

पत्थाणाहिमुहस्स कुमारअस्स णिक्कम्पधीरगम्भीरगरु-
अत्तणेण रोसो क्खु एदस्स मिअङ्कमण्डलं विअ उप्पाओ
वअणं संकन्तो दाव । (कर्णे ।) विस्सवेहि । एव्वंत्ति ।

सीता । (४) (तथैव ।) हला असमञ्जसो दे णिओओ ।
विआरेहि ।

एरिसं साहसं मज्झ ण हु जुत्तदरं भवे
ण सत्ता गअबन्धस्स मक्कडीकअतन्तओ ॥

(विचिन्त्य कृच्छ्रादग्रतो गत्वा । प्रकाशम् ।) अज्ज-
उत्त । जइ का वि । (इत्यधोक्ते । स्वगतम् ।) हन्त
सुक्कपत्तआली विअ संकुणदि मे जीहा । (इति
पादाङ्गुष्ठेन कुट्टिममुल्लिखन्ती वाक्स्तम्भं नाटयति ।)

रामः । (स्वगतम् ।) अहो अमृतबिन्दुसुन्दराणीव यावद-
नवमानमन्थराण्यक्षराणि (सप्रेमानुकम्पं पदान्तरे
प्रतिनिवृत्य तां हस्ते गृहीत्वा । प्रकाशम् ।) अयि
जीवितेश्वरि ! न खलु वशवर्तिनि जने भीतिरवकाशं
लभते । तदभिकाममाज्ञापय ।

प्रस्थानाभिमुखस्य कुमारस्य निष्कम्पधीरगम्भीरगुरुत्वेन रोष खलु तस्य मृगाङ्कमण्डल-
मिवोत्पातो वदनं संक्रान्तस्तावत । विज्ञापय । एवमिति ।

(४) सीता । हला असमञ्जसस्ते नियोगः । विचारय ।

ईदृशं साहस मम न खलु युक्ततर भवेत् । न शक्ता गजबन्धाय मर्कटीकृततन्तवः ॥

आर्यपुत्र । यदि कापि । हन्त शुष्कपत्रपालीव संकुचति मे जिह्वा ।

सीता। (५) (कृच्छ्रादभिमुखीभूय।) पिअंवद! जइ कावि तुम्हाणं इत्यर्धोक्ते पुनः स्विन्नाङ्गुलिपल्लवमञ्जलिमेवावशेषवचनीकृत्यावनताननं तिष्ठति।)

रामः। (अञ्जलिं स्ववक्षसि निधाय।) अयि शापितासि जीवितेन मे यदि वचनावशेषं नोदीरयसि।

सीता। (६) (स्वगतम्। का गई। रामस्य करकनिष्ठिकानिह्नितां मुद्रिकामङ्गुलिभिर्मूलादग्रमग्राच्च मूलं नयन्ती। प्रकाशम्। पाणेसर! जइ का वि तुम्हाणं अणुकम्पणीआ होदि ता खत्तिअकुलकविदकिदन्तस्स विप्फुरिदपरसुणो परसुरामस्स अलं जाव अहिजाणेण। (इति व्रीड़ावैलक्ष्यभयानि रूपयति।

रामः। अयि यदनुकम्पनीयेति वा कथमुच्यते नाम। ननु

दर्शनात् प्रमदोद्याने प्रथमात् प्रभृति प्रिये!।
ध्रुवं मे प्रणयेनासि प्राणेभ्योऽपि गरीयसी॥

(नेपथ्ये।) भो भोः कान्दिशीकाः कथयन्तु भवन्तः। क्व रामो दाशरथिः।

(५) सीता। प्रियवद! यदि कापि युष्माकम्।

(६) सीता। का गतिः। प्राणेश्वर! यदि कापि युष्माकमनुकम्पनीया भवति तत् क्षत्रियकुलकुपितकृतान्तस्य विस्फुरितपरशोः परशुरामस्यालं यावदभियानेन।

सीता । (७) (आकर्ण्य ।) अइ जीविदणाह ! (इति साध्वसं सूचयन्तीव बाहुभ्यां कण्ठे गृहीत्वा रामस्योरसि शिरो- विन्यस्य स्थिता ।)

रामः । सुन्दरि ! अलमावेगेन । इति बाहुभ्यां तामावेष्टते ।)

सीता । (८) स्वगतम् ।) अम्मा । कुवलअदामेण विअ आसिङ्घलं णिरुद्ध म्हि । (इति पुलकं रूपयति ।)

सूनृता । (९) (निरूप्यात्मगतम् ।) अम्महे । अहुणा सही मम,

भाइ दुव्वादलस्सामे रामङ्गे लीणविग्गहा ।
जधा मरगअक्खम्भे उक्किण्णा हेमणी लआ ॥

(हृदि करतलमारोप्य ।) हिअअ ! पेक्खसु दाणिं जं जं तुह संकप्पिदं आसि ।

रामः । (निध्याय । स्वगतम् । अथ पुनः साध्वसमपि प्रेक्षणीयतरमेतस्याः । अहो ।

कलयति कलङ्कमिन्दो-
र्वक्त्रं स्वेदोपक्रमेणास्याः ।

---

(७) सीता । अयि जीवितनाथ ।।

(८) सीता । अम्मा कुवलयदाम्नेवाश्लिष्टं निरुद्धास्मि ।

(९) सूनृता । अम्महे, अधुना सखी मम ।

भाति दूर्वादलश्यामे रामाङ्गे लीनविग्रहा ।
यथा मरकतस्तम्भ उत्कीर्णा हैमी लता ॥

हृदय ! प्रेक्षस्वेदानीं यद्यत् तव संकल्पितमासीत् ।

चञ्चलमक्षि च लक्ष्मीं
ग्लपयति नीलोत्पलस्यापि ॥

(सविमर्शम् ।) कथङ्कारं वा मया पानःपुन्येनैव-मसमीचीनं तावदारोप्यते । तथाहि,

अदृष्टचरवस्तुनः परिचयाय विज्ञैः पुनः
प्रतीतमतिदिश्यतः सदृशवस्तु निर्दिश्यते ।
कयापि कलया समं जगति नास्ति यस्य क्वचित्
कथं तदतिदिश्यते निरुपमं वपुः सुभ्रुवः ॥

अपि वा सर्वथा,

ये केचिदत्र भुवने वनजेन्दुकुन्द-
ज्योत्स्नामृतप्रभृतया रमणीयवर्गाः ।
ते लेशतोऽपि न तुलां कलयन्ति तेभ्यो
वैशिष्ट्यमेव परिचायकमायताक्ष्याः ॥

(प्रकाशम् ।) तदद्य खलु कृतं मे महदुपकृतं मुनिना । यावदनुभवाम्येवमसुलभालिङ्गनमपि । (कराभ्यां तत् करयुगलमाकलय्य ।) अयि अलोकाशङ्कोत्प्रेक्षिणि !

आकर्ण्याभ्यर्णकुञ्जेषु मात्यद्विरदबृंहितम् ।
सन्नद्धस्य हरेः पापं शङ्कसे किं हरिप्रिया ॥

(इति सस्पृहं सीतामुखं पश्यति ।)

( नेपथ्ये । )

छिद्रोद्गच्छदसंख्यहंसमिषतस्तीक्ष्णैः क्षुरप्रैः पुरा
क्षुण्णो मूर्तिमदुज्जगौ क्षितिधरः क्रौञ्चो यदीयं यशः ।
आभुग्नभ्रुकुटीविटङ्कविकटः कूटं नृणां कूटयन्
देही दर्प इवोपसर्पति रयात् सोऽयं क्रुधा भार्गवः ॥

सीता । १० । (श्रुतिमभिनीय । सलज्जमात्मगतम् ।) हद्धी हद्धी । अविसओ णाम सङ्काए ईरिसं वीरस्स वारइदुं । छिरिआमि इमिणा अज्जउत्तस्स पुरो मुहं संदंसिदुं । उस्सप्पिणी क्खु इमस्स अन्भत्थणा । (साक्षेपम् ।) किं णु वा एसो वीरवत्तीए समुदाआरो । सच्चं ।

महण्णवस्स दइआ होइ एव्व महाणई ।
ण क्खु होउं अरुहइ कम्मणासा णई पुणो ॥

( सकृदेव रामस्यास्यं संलक्ष्य । सवैलक्ष्यम् । ) अब्भमित्तीणा क्खु एसा विजअप्पत्थाणं अवेक्खदि । अहह अज्ज,

(१०) सीता । हा धिक् । हा धिक् । अविषयो नाम शङ्काया ईदृशं वीरस्य वारयितुम् । जिह्रेम्यनेनार्यपुत्रस्य पुरो मुखं सदर्शयितुम् । उत्सर्पिणी खल्वस्याभ्यर्थना । किं नु वैष वीरपत्न्याः समुदाचारः । सत्यम् ।

महार्णवस्य दयिता भवत्येव महानदी ।
न खलु भवितुमर्हति कर्मनाशा नदी पुनः ॥

अभ्यमित्रीणः खल्वेष विजयप्रस्थानमपेक्षते । अहह, आर्य,

जमोविग्गहलुद्धस्स वीरस्स परिवन्थिणी ।
श्रोह्वीणा वीरणारीणं भविस्सं इमिणा धुश्रं ॥

( बद्धाञ्जलिः । प्रकाशम् । ) श्रज्जउत्त ! जीविदेसर ! मरिसेहि । एत्थ हि इत्थिश्राजणसुलहा श्रासङ्का एव्व श्रवरज्झदि । ( सोत्प्रासम् । ) णाह ।

श्रहुणा गच्छ सच्छन्दं श्रजेश्रं जश्र भग्गवं ।
पेक्खिस्सं जश्रलच्छीए श्रासिलिट्ठं तुमं पुणो ॥

(इति बाहुभ्यां राममाश्लिष्यति रामोऽपि प्रत्याश्लिष्यति ।)

सूनृता (११) सहर्षस्नेहम् । ) साहु सहि । साहु । जोग्गा सि भग्गकोदण्डखण्डणस्स से घरिणी ।

रामः । (सपरितोषम् ।) सखि ! पदे पदे प्रमादस्थानानि ते रत्नगर्भागर्भसम्भवाया: प्रियसखाः ; अप्रमादमवेक्षस्व । इति सूनृताया हस्ते सीतां समर्पयति । )

(नेपथ्ये । ) भो भो जनकायनाः । क्व रामो दाशरथिः ।

रामः । श्रुत्वा । ससंरम्भम् ।) अयमहं भो जगद्गुरोर्गाधि-

---

यशोविग्रहलुब्धस्य वीरस्य परिपन्थिनी ।
अवहीना वीरनारीणां भविष्याम्यनेन ध्रुवम् ॥

आर्यपुत्र ! जीवितेश्वर ! मर्षय । अत्र हि स्त्रीजनसुलभाशङ्कैवापराध्यति । नाथ !

अधुना गच्छ स्वच्छन्दमजेयं जय भार्गवम् ।
द्रक्ष्यामि जयलक्ष्म्याश्लिष्टं त्वां पुनः ॥

(११) सूनृता । साधु सखि ! साधु । योग्यासि भग्नकोदण्डखण्डनस्यास्य गृहिणी ।

नन्दनस्यान्तेवासी गच्छामि । ( इति साटोपं परिक्रम्य निष्क्रान्तः । )

( नेपथ्ये । )

एकः । ( घर्घरस्वरम् । ) अरे रे क्षत्रियडिम्भ ! दिलीपकुल-कलङ्क ! न खलु शङ्कसे नाम । अहोवत ।

क्षत्रियारण्यदावाग्नौ प्रज्वलत्यपि मादृशे ।
क्षुद्र ! त्वयापि निर्विघ्नं भग्नं भर्गशरासनम् ॥

तत् समारोपय पयोमुखाद्य वैष्णवं धनुः ।

अन्यः । ( धीरकण्ठम् ।) भगवन् भार्गव ! अलं बहु विकत्थ्य । अपि नामैतदापृच्छ्यते खलु प्रतिगमनाय ।

अवध्योऽसि यतो जात्या यथेच्छं गच्छ सत्वरम् ।
कुतः प्राग्गिति वृद्धोऽचो नीतो हर्यंत्तलच्यताम् ॥

( आकाशे । ) जानासि वत्स ! दर्पसौजन्ययोरनुरूप-मुदीरयितुम् । स्थाने खलु ते,

अन्तर्गतापि विनयेन नियन्त्रितापि
ज्वालास्य रोषदहनस्य बहिर्जिहीते ।
तेजोमयस्य दरशीतलबाष्पकोषं
भित्वा त्विषा हि वलते रविमण्डलस्य ॥

सूनृता । (१२) (आकर्ण्य । सोल्लासम् ।) सखि ! शृणाहि ।

---

(१२) सूनृता । सखि ! शृणु ।

सीता। (१३) हला सोम्मोदारसहावो क्खु अज्जउत्तो ।

वण्डुग्गमुत्थ-गावाणं णिअरं सणिअं पुणो ।

पसन्त-प्पइदी तुण्हिं आकड्ढइ वसुन्धरा ॥

( आकाशे । ) भो भो वैमानिकाः । प्रवर्त्यन्तां मङ्गलानि ।

आश्चर्यमाश्चर्यम् ।

तिष्ठत्यसौ रोषयुतोऽपि जोषं
स्थाणुर्यथा स्थाणुपदान्तवासी ।
तेजः समग्रं धनुषेव सार्धं
रामेण कृष्टं वपुषः किमस्य ॥

रामभद्र ! रामभद्र ! सत्यं चण्डांशुकुलमण्डनमसि । जाने महासागरादेव कौस्तुभस्य पुनरुद्गमः । किञ्च,

शौर्यरत्नसुधासिन्धुर्नयनानन्दबान्धवः ।
औचित्यस्योचितं धाम राम ! त्वं रघुपुङ्गवः ॥

सीता। (१४) ( श्रुत्वा । सहर्षम् । ) सहि ! विमाणविहारिणो उवत्थुवन्ति विअ अज्जउत्तं ।

(१३) सीता। हला, सौम्योदारस्वभावः खल्वार्यपुत्रः ।

वक्त्रादुद्गमोत्थग्रावाणां निकरं शनैः पुनः ।

प्रशान्तप्रकृतिस्तूष्णीमाकर्षति वसुन्धरा ॥

(१४) सीता। सखि ! विमानविहारिण उपस्तुवन्तीवार्यपुत्रम् ।

सनृता । (१५) एव्वं खेदं ।

(नेपथ्ये ।) भगवन् । शिशुचेष्टितं स्वल्पमपि गुरूकृत्य लालयन्ति गुरवः । ( इति मङ्गलवाद्यध्वनिः । )

सीतासूनृते । (१६) (सहर्षोच्छ्वासम् ।) जअ जअ भअवं मिहिलेसर ! ।

सीता । (१७) एहि एहि सहि ! । दिट्ठिआ अपरिस्सधं परिस्सएहि मं । ( इति तां परिष्वजते । )

सनृता । (१८) (तथैव गाढ़ं परिष्वज्य ।) अच्छेरं । अच्छेरं । पुणरुत्तदारुणस्स परिणामकारुणिअत्तणं विहिणो दाव ।

( आकाशे गीयते । )

(१९) अघणं गअणविदाणं
दाणिं दट्ठूण चन्दिमाहसिअं ।
वसहिं मग्गइ पआउं
घरिणिं घेऊण सं हंसो ॥

---

(१५) सूनृता । एवमेतत् ।

(१६) सीतासूनृते । जय जय भगवन् ! मिथिलेश्वर ! ।

(१७) सीता । एह्येहि सखि ! दिष्ट्यापरिश्रथं परिष्वजस्व माम् ।

(१८) सूनृता । आश्चर्यमाश्चर्यम् । पुनरुक्तदारुणस्य परिणामकारुणिकत्वं विधेस्तावत् ।

(१९) अघनं गगनवितानमिदानीं दृष्ट्वा चन्द्रिकाहसितम् ।
वसतिमिच्छति प्रयातुं गृहिणीं गृहीत्वा स्वां हंसः ॥

सूनृता । (२०) ( निशम्य । सीतां प्रति । ) सहि ! पेक्खसि किं । णं अभोज्झागमणोस्सुओ कुमारओ दाव ।

सीता । (२१) ( सहर्षविमर्षम् । ) अहकिं ।

(नेपथ्ये ।) वत्से ! बुद्धिषेणि ! ननु किमनुतिष्ठति भगवती योगीश्वरी । किं ब्रवीषि । ऊर्मिलाजनन्या पातिव्रत्यमधिकृत्य पृष्टा तस्यै किलान्तःपुरपुरन्ध्रीसहितायै तावदुपदिशतीति ।

सीता । (२२) ( आकर्ण्य । ) हला अब्भत्थिदो क्खु एसो मुहुत्तो । ता सम्पदि देव्वेण अब्भुववण्णा भअवदीए तादस्स अ पाअन्तिअं उवसप्पिअ आआरं पडिवज्जेमि । तुमं पुणो जाव आअच्छेमि इह एव्व चिट्ठ ।

सूनृता । (२३) सहि ! तुवर ।

( सीता द्रुतमुद्भ्रान्तकेन निष्क्रान्ता । )

( आकाशे । )

(२४) विम्ब-णिअन्तण-णिउणि !

विज्ज ! कधं वा पअबभचरिआ वि ।

(२०) सूनृता । सखि । पश्यसि किं । नन्वयोध्यागमनोत्सुकः कुमारस्तावत् ।

(२१) सीता । अथ किम् ।

(२२) सीता । हला अभ्यर्थितः खल्वेष मुहूर्तः । तत् सम्प्रति दैवेनाभ्युपपन्ना भगवत्यास्तातस्य च पादान्तिकमुपसृप्याचारं प्रतिपद्ये । त्वं पुनर्यावदागच्छामी हैव तिष्ठ ।

(२३) सूनृता । सखि ! त्वरस्व ।

णिअलम्मि मिव णिरुद्धा

जन्ते सअन्तहीणा सि ॥

सूनृता । (२५) (श्रुत्वा । उद्बोधितेव ।) ओगदो गीदीए अक्खरत्थो । दाणिं सुमरेदि मं अप्पीअजणो । (विचिन्त्य ।) इह साअन्तं दाव सव्वधा विमग्गणिज्जं । कुदो ।

साअन्तं जेव्व लोआणं लोओत्तरसुहावहं ।

विणा णेण भारमेत्तं सुसं वा जीअणं सआ ॥

अवस्सं वासवावासे दासत्तणमवेक्खिअ ।

अवभत्थणीअं णिरए राअत्तणपअं पुणो ॥

( सर्वतो दत्तदृष्टिः । सस्मितम् । ) हन्त । णासि क्खु ओआसलेसो वि सच्छन्ददो मे चिन्तिदुं । एत्तिअं जाव कालं सणिओअ-वावुड़ा विम्हरिअ विअ अप्पाणं पवसामि ।

---

(२४) विश्वनियन्त्रणानिपुणं ! विद्वन् ! कथं वा प्रगल्भचारितापि।

निगड इव निरुद्धा यन्त्रे स्वातन्त्र्यहीनासि ॥

(२५) सूनृता । अवगतो गीतेरक्षरार्थः । इदानीं स्मरति मामात्मीयजनः । इह स्वातन्त्र्यं तावत् सर्वथा विमार्गणीयम् । कुतः ।

स्वातन्त्र्यमेव लोकानां लोकोत्तरसुखावहम् ।

विनानेन भारमात्रं शून्यं वा जीवनं सदा ॥

अवश्यं वासवावासे दासत्वमपेक्ष्य ।

अभ्यर्थनीयं निरये राजत्वपदं पुनः ॥

( नेपथ्ये । ) (२६) अच्छेरं । जाणामि सिविणआलावो विअ । ता अवहिदा सुणामि जाव सेसं ।

सूनृता । (२७) (अनाकर्ण्य ।) देईए मन्दुदरीए अस्मा हि एसा । जधा जादे ! सुण्दि ! मोण्हाए मे पमिल्लाए संबन्धेण तुमं कस्सआ सि । ता अरिहसि किंपि एक्कं मह पिअं कादुं । अवि दे सुइपहं उवअदं, अत्थि किल विदेहेसु देहवं विअ राअधम्मो सीरद्धओ णाम को वि महाणुभाओ राएसी । तस्स तिहुअण-ललामभूदा सीदा णाम दुहिदिएत्ति । तदो णिस्ससिअ उत्तं, वच्छे ! अच्छदि हि ताए सद्धं को वि मे सोणिदसंबन्धो । हन्त सुणामि ।

बालाए अपि ताए

कव्वूर-णाहस्स णिवडिआ दिट्ठी ।

---

हन्त नासीत स्वल्पकालमिश्रोऽपि स्वच्छन्दता मे चिन्तयितुम् । एतावन्त यावत कालं स्वनियोगव्यापृता विस्मृत्येवात्मान प्रवसामि ।

(२६) आश्चर्यम् । जानामि स्वप्नालाप इव । तदवहिता शृणोमि यावच्छेषम् ।

(२७) सूनृता । देव्या मन्दोदर्या आज्ञा ह्येषा । यथा जाते ! सुनृते ! स्नुषाया मे प्रमीलायाः सम्बन्धेन त्वं कन्यासि । तदर्हसि किमप्येकं मम प्रियं कर्तुम् । अपि ते श्रुतिपथमुपगतम्, अस्ति किल विदेहेषु देहवानिव राजधर्मः सीरध्वजो नाम कोऽपि महानुभावो राजर्षिः । तस्य त्रिभुवनललामभूता सीता नाम दुहितेति । ततो निःश्वस्योक्तं, वत्से ! आस्ते हि तया सार्धं कोऽपि मे शोणितसम्बन्धः । हन्त शृणोमि ।

भिंगो हि पोम्मकलिअं
घुम्मइ समआ पमत्तो व्व ॥

ता अज्ज विज्जामाहप्पेण अप्पणो उपसप्पिअ णअरं जणअराअस्स किस्सा वि सजणमिसादो क्खु अन्तेउरमज्झम्मि पवेसं लम्भिअ च तत्थ उण पवसेहि दाव । अध कदाआ वि कुमारीए,

फंसिउमपि से छाहं
जह जह सक्कइ ण रक्खसी माआ ।
तह तह कज्जं तुमए
होस्सइ पाणिग्गहो जाव ॥

इअ सुणिअ मए भणिदं । अज्जुए ! ता अज्ज किं पालणकम्मो से मज्झ हत्थे पइस्सो एसो । णं विआरेदु ।

अप्पुन्न-पत्त-लोणं पि गोस-णीहार-विप्पुसं ।

बालायामपि तस्यां कन्दर्पनाथस्य निपतिता दृष्टिः ।
भृङ्गो हि पद्मकलिकां भ्रमति समया प्रमत्त इव ॥

तदद्य विद्यामाहात्म्येनात्मन उपसृप्य नगरं जनकराजस्य कस्या अपि स्वजनमिषात् खल्वन्तःपुरमध्ये प्रवेशं लब्ध्वा च तत्र पुनः प्रवस तावत् । अथ कदापि कुमार्याः,

स्प्रष्टुमपि तस्याश्छायां यथा यथा शक्नोति न राक्षसी माया ।
तथा तथा कार्यं त्वया भविष्यति पाणिग्रहो यावत् ॥

इति श्रुत्वा मया भणितम् । अज्जु ! अद्य किं पालनकर्मास्या मम हस्ते प्रदत्तमेतत् । ननु विचारयतु ।

केदई तवणुम्राउ रक्खिउं ण क्खु सक्कइ ॥

तइ मेहणादजणणीए कधिदं । जादे ! ण क्खु इणं समीईणं उदीरेसि । तधा हि ।

हिमइि-सिहरत्था वि हिमाणी मिहिरंसुणा ।
कलिआ गलिआ होइ णिमित्तं णिअदी इह ॥

जइवि अदिट्ठं जेव्व बीजभूदं सुहदुक्खाणं । तधा वि मिणेहाउ एव्वं मे विग्गोबो त्ति । (क्षणं तूष्णीम्भूय । सहासम् ।) अम्मो । उम्मत्तीभूदं विअ मे हिअअं । कस्स वा अप्पेमि को णु वा सुणादि ।

(नेपथ्ये ।)

वत्से ! जनकवंशसुवासिनि ! पुरा किलार्यपुत्रेण भगवता योगीश्वरेण सम्यगेवानुशासितासि । तथापि समुदाचार इति पुनरुक्तप्रायमन्यदपि किञ्चिदुपदिश्यते । इतः खलु पतिकुलं प्राप्य ।

---

आत्मीयपत्नीनामपि नैश्वर्नोहारविप्लवम् ।
कैतको तपनोष्मणो रक्षितुं न खलु शक्नोति ॥

तदा मेघनादजनन्या कथितम् । जाते ! न खल्विदं समीचीनमुदीरयसि । तथाहि

हिमाद्रिशिखरस्थापि हिमानी मिहिरांशुना ।
कलिता गलिता भवति निमित्तं नियतिरिह ॥

यद्यप्यदृष्टमेव बीजभूतं सुखदुःखयोः । तथापि स्नेहादेवं मे व्याकुलभाव इति । अम्मो । उन्मत्तीभूतमिव मे हृदयम् । कस्मै वा अर्पयामि को नु वा शृणोति ।

